मिच्छत्तं वेदंतो जीवो विवरीयदंसणो होदि ॥

ण य धम्मं रोचेदि हु महुरं खु रसं जहा जरिदो ॥ ४१ ॥

**मिथ्यात्वं वेदयन्नंगी न तत्त्वे कुरुते रुचिम् ॥**

**कस्मै पित्तज्वरार्त्ताय रोचते मधुरो रसः ? ॥ ४४ ॥**

विजयोदया—एवं मिथ्यात्वस्य कर्मत्वकल्पितस्य उदय' सन्निहितसहकारिकारणस्य स्वकार्यजनने प्रतिवद्धवृत्तिस्तेनोदयेन कारणेन निरूपितं वस्तुयाथात्म्य न श्रद्धत्ते अतत्त्व तु कथितं अकथितं वा श्रद्धत्ते । वस्तुयाथात्म्याश्रद्धाने को दोपो येन कारणेन निरूपित वस्तुयाथात्म्यं न श्रद्धत्ते । अतत्त्वं तु कथितं अकथित वा श्रद्धत्ते ।

हिंदी अर्थ—मिथ्यात्व कर्मका अनुभव लेनेवाला यह जीव विपरीत श्रद्धावाला वन जाता है. उसको जैनधर्मका स्वरूप अच्छा मालूम नहीं होता है. जैसे ज्वरपीडित मनुष्यको मधुर भी खांडका रस कटु ज्ञात होता है. जव सहकारिकारणोंकी मदत मिथ्यात्व कर्मको मिलती है तव वह अपना कार्य करनेमें कटिवद्ध होता है. अर्थात् वस्तुका यथार्थ स्वरूप वतानेपर भी जीव इस कर्मके उदयसे उसपर श्रद्धान नहीं करता है. और अतत्त्वके ऊपर उसका स्वरूप कहो अथवा न कहो श्रद्धा हो जाती है. वस्तुके यथार्थ स्वरूप पर अश्रद्धा होनेसे अतत्त्वमें श्रद्धा हो जाती है यह दोप उत्पन्न होता है.

वस्तुयाथात्म्याश्रद्धाने को दोपो येन तत्प्रतिपक्षश्रद्धानभावनाया तदपास्यते इत्याशंकायां अश्रद्धानकृतदोपमाहात्म्यख्यापनार्था गाथा—

सुविहियमिमं पवयणं असद्दहन्तेणिमेण जीवेण ॥

बालमरणाणि तीदे मदाणि काले अणंताणि ॥ ४२ ॥

**अनेनाश्रद्दधानेन जिनवाक्यमनेकशः ॥**

**बालबालमृतिः प्राप्ताः कालेऽतीते ( यतोऽङ्गिना ) ॥ ४५ ॥**

विजयोदया—सुविहिदमिति । सुष्ठ विहित कृत पूर्वापरविरोधदोपरहितवस्तुयाथात्म्यग्राहिविज्ञानकारणं । इमं इद । पवयण प्रवचनं । असद्दहतेण अश्रद्दधानेन । इमेण अनेन । जीवेण जीवेन । एवमत्र पदसंबंध' । वालमरणाणि

अणंताणि मदानि तीदे काले इति । बालमरणान्यनन्तानि अतीतकाले मृतानि । ननु मिथ्यादृष्टेर्मरणं बालबालमरणं तत्किमुच्यते बालमरणानीति । बालत्व नाम सामान्यं बालबालेऽपि विद्यते इति बालमरणानीत्युक्तं ।

---

तत्त्वाश्रद्धाने को दोषो येन तत्सम्यक्त्वभावनया निरस्यते इत्यत्राह—

मूलारा–सुविहिदं—दृष्टेष्टाविरुद्धं पूर्वापरविरोधरहितं वा । केचित्तु सुविहिद इति पठंति । हे सुचरित्र इति व्याख्यानयंति च । इमं इदं गुरुपर्वक्रमायातं । इमिणा अनेन स्वसंवेदनसिद्धेन । बालमरणानि बालबालमरणानि बालत्वसामान्यस्य बालबालेऽपि विद्यमानत्वात् । तीदे अतीते । मदाणि मृतानि मासानि धातूनामनेकार्थत्वात् ।

---

वस्तुके यथार्थ स्वरूपमें श्रद्धा न करनेसे कोनसा दोष उत्पन्न होता है. कि जिसको यथार्थ श्रद्धान की भावनाके द्वारा दूर करना पडता है. ? ऐसी शंका होनेपर अश्रद्धानसे उत्पन्न हुए दोषका माहात्म्य वर्णन करनेके लिये उत्तर गाथा कहते हैं—

हिंदी अर्थ—यह जिनागम पूर्वापरविरोधादिदोषरहित है. और वस्तुके यथार्थस्वरूपका ग्रहण करनेवाले ज्ञानको उत्पन्न करता है. परंतु ऐसे आगमके ऊपर अश्रद्धान करनेसे इस जीवने अतीत कालमें–भूतकालमें अनंत बालबालमरण किये है. शंका–मिथ्यादृष्टीके मरणको बालबालमरण कहते हैं और आप उसके मरणको बालमरण कहते हैं.

उत्तर—बालत्व नामका सामान्य धर्म बालबालमरणमें भी विद्यमान है इसलिये उसको बालमरण कहते हैं.

---

कीदृशी तर्हि मति कार्या संसारभीरुणा—

णिग्गंथं पव्वयणं इणमेव अणुत्तरं सुपरिसुद्धं ॥
इणमेव मोक्खमग्गोत्ति मदी कायव्विया तम्हा ॥ ४३ ॥

इदमेव वचो जैनमनुत्तममकल्मषम् ॥
निर्ग्रंथं मोक्षवर्त्मेति विधेया धिषणा ततः ॥ ४६ ॥

विजयोदया—णिग्गंथं पव्वयणं । ग्रथ्नंति रचयन्ति दीर्घीकुर्वन्ति संसारमिति ग्रथा. । मिथ्यादर्शनं, मिथ्या-

ज्ञान, असंयमः, कषाया., अशुभयोगत्रयं चेत्यमी परिणामाः। मिथ्यादर्शनान्निष्क्रान्तं किं सम्यग्दर्शनं। मिथ्याज्ञानान्निष्क्रांतं सम्यग्ज्ञानम्। असंयमात्कषायेभ्योऽशुभयोगत्रयाच्च निष्क्रान्तं सुचारित्रं तेन तत्त्रयमिह निर्ग्रंथशब्देन भण्यते। पव्वयणं प्रवचनस्येदं अभिधेयं। इणमेव इदमेव अणुत्तरं न विद्यते उत्तरं उत्कृष्टमस्मादिति अनुत्तरम्। सुपरिशुद्धं सुष्ठु परिशुद्धं। इणमेव इदमेव। मोक्खमग्गोत्ति कर्मणा निरवशेपापायस्योपाय इति। मदी बुद्धिः। कायव्विया कर्तव्या। तम्हा तस्मात्। यस्मादेवंभूतायामसत्या मत्या दु:खमरणप्राप्तिरतीतकाल इव भविष्यत्यपि काले भविष्यतीति।

---

भगवन्यद्येवं तर्हि संसारभीरुणानेन कीदृशी मति कर्तव्येत्यत्राह—

मूलारा—णिग्गंथमित्यादि—ग्रथ्नंति रचयंति दीर्घीकुर्वन्ति संसारामिति ग्रंथा मिथ्यादर्शनादयः। तत्र मिथ्यादर्शनान्निष्क्रान्तं सम्यग्दर्शनं, मिथ्याज्ञानात्सम्यग्ज्ञानं, असंयमकषायाशुभयोगेभ्यश्च सम्यक्चारित्रं इति। रत्नत्रयमत्र निर्ग्रंथ शब्देनोच्यते॥ पावयण—प्रावचन प्रवचनस्य जिनागमस्य अभिधेयं केवलिप्रज्ञप्तमित्यर्थः। अन्ये तु निःसंग प्रवचनमिति प्राधान्येन व्याचक्षते। इणमेव सुपरिसुद्धं इदमेव सुष्टु समन्तान्निर्दोषं सत्। अणुत्तरं लोकोत्तमं। 'केवलिपण्णत्तो धम्मो लोगोत्तमो, इति वचनात्। मदी मतिरभ्युपगम.। कादव्विया कर्तव्या। तम्हा तस्मात्। यत एवंविधां मतिं कुर्वता अनेन जीवेन दुःखैकमये भवार्णवे अनादिकालं भ्रान्तमिति भाव।

---

संसारसे डरनेवाले मनुष्यको अपने मनमें कैसे विचार करने चाहिये इस प्रश्नका उत्तर आचार्य देते हैं—

हिंदी अर्थ—जो संसारको गूंथते हैं अर्थात् जो संसारकी रचना करते हैं, जो संसारको दीर्घकाल तक रहनेवाला करते हैं उनको ग्रंथ कहना चाहिये. मिथ्यादर्शन, मिथ्याज्ञान. असंयम, कषाय, अशुभ योगत्रय अर्थात् अशुभ मनोयोग, वचनयोग और काययोग इन परिणामोंको आचार्य ग्रंथ ऐसा नाम देते हैं. मिथ्याश्रद्धा जब हट जाती है तब सम्यग्दर्शन उत्पन्न होता है. मिथ्याज्ञान नष्ट हो जानेसे सम्यग्ज्ञान पैदा होता है. असंयम, कषाय और अशुभ तीन योग इनसे रहित जो चारित्र उसको सम्यक्चारित्र कहते हैं. सम्यग्दर्शन, सम्यग्ज्ञान और सम्यक्चारित्रको अर्थात् रत्नत्रयको आचार्य निर्ग्रन्थ यह संज्ञा देते हैं. यह निर्ग्रन्थ ही अर्थात् रत्नत्रय ही जगतमें सर्वोत्कृष्ट पदार्थ है. इससे भी उत्कृष्ट पदार्थ दूसरा कोई भी नहीं है. यह पदार्थ पूर्ण निर्दोष है. यही मोक्ष है. अर्थात् इससे ही संपूर्ण कर्मोंका नाश होगा. ऐसा मनमें सदा विचार करना चाहिये. इस तरहका विचार

यदि न हो तो जैसे भूतकालमें जन्ममरणके दुःख इस जीवको भोगने पडे थे ऐसे ही दुःख भविष्यत्कालमें भी अवश्य भोगने पडेंगे.

---

तच्च सम्यक्त्वं निरतिचारं गुणोज्ज्वलितं भावनीयं इत्येतदाचष्टे उत्तरप्रबंधेन तत्रातिचारनिवेदनार्थोत्तरगाथा—

सम्मत्तादीचारा संका कंखा तहेव विदिगिंछा ॥
परदिठ्ठीण पसंसा अणायदणसेवणा चेव ॥ ४४ ॥
शंकाकांक्षाचिकित्सान्यदृष्टिशंसनसंस्तवाः ॥
सदाचारैरतीचाराः सम्यक्त्वस्य निवेदिताः ॥ ४७ ॥

विजयोदया—सम्मत्तादीचारा श्रद्धानस्य दोषाः । संका शंका, संशयप्रत्यय. किं स्विदित्यनवधारणात्मकः । स च निश्चयप्रत्ययाश्रयं दर्शनं मलिनयति । ननु सति सम्यक्त्वे तदतिचारो युज्यते । संशयश्च मिथ्यात्वमावहति । तथाहि मिथ्यात्वभेदेषु संशयोऽपि गणित. ।

' संसइदमभिग्गहिदं अणभिग्गहिदं च त तिविधं ' इति । सत्यपि संशये सम्यग्दर्शनमस्त्येवेति अतिचारता युक्ता । कथ ? श्रुतज्ञानावरणक्षयोपशमविशेषाभावात्, उपदेष्टुरभावात्, तस्य वा वचननिपुणता नास्ति, तन्निर्णयकारिश्रुतवचनानुपलब्धे , अभावाद्वा, काललब्धेरभावाद्वा यदि नाम निर्णयो नोपजायते । तथापि तु इदं यथा सर्वविदा उपलब्ध तथैवेति श्रद्धधेहमिति भावयत कथं सम्यक्त्वहानि. ? एवंभूतश्रद्धारहितस्य को वेति किमत्र तत्वमिति अदृष्टेषु कपिलादिषु सर्वज्ञतैव दुरवधारा, अयमेव सर्वविन्नेतर इति आगमशरणताया को वस्तुयाथात्म्यानुसारी को वा नेति सशय एवेति यत्तत्त्वाश्रद्धानं संशयप्रत्ययोपनीतत्वात्तत्संशयमिथ्यात्वमित्युच्यते । अश्रद्धानरूपतैव लक्षणं मिथ्यात्वस्य यथा वक्ष्यति ' तं मिच्छत्तं जमसद्दहणं तच्चाण होदि अत्थाण ' मिति । अन्यथा मिथ्याज्ञानस्य मिथ्यादर्शनस्य च भेदो न भवेद्, भेदश्च स्फुटो वाक्यांतरे ' मिच्छाणाणमिच्छादंसण मिच्छाचारित्तादो पडिविरदोमीति ' । किं च छद्मस्थाना रज्जूरगस्थाणुपुरुषादिषु किमियं रज्जूरुरगः, स्थाणु पुरुषो वा किमित्यनेकः संशयप्रत्ययो जायते इति ते सम्यग्दृष्टय स्यु ।

काक्षा गार्ध्यं आसक्ति , सा च दर्शनस्य मलं । यद्येवं आहारे काक्षा, स्त्रीवस्त्रगंधमाल्यालंकारादिषु वाऽसयतसम्यग्दृष्टेर्विरताविरतस्य वा भवति । यथा प्रमत्तसंयतस्य परीषहाकुलस्य भक्ष्यपानादिषु काक्षा संभवतीति सातिचारदर्शनता स्यात् । तथा भव्याना सुखकांक्षा अस्त्येवेत्यत्रोच्यते न काक्षामात्रमतीचारः किं तु दर्शनाद्व्रताद्दानाद्देवपूजायास्तपसश्च जातेन पुण्येन ममेदं कुलं, रूपं, वित्त, स्त्री-पुत्रादिकं, शत्रुमर्दनं, स्त्रीत्वं, पुंस्त्वं वा सातिशय स्यादिति कांक्षा इह गृहीता एषा अतिचारो दर्शनस्य ।

विचिकित्सा जुगुप्सा मिथ्यात्वासयमादिपु जुगुप्सायाः प्रवृत्तिरतिचारः स्यादिति चेत् इहापि नियतविपया जुगुप्सेति मतातिचारत्वेन। रत्नत्रयाणामन्यतमे तद्वति वा कोपादिनिमित्ता जुगुप्सा इह गृहीता। ततस्तस्य दर्शन, ज्ञानं, चरण वाऽशोभनमिति। यस्य हि इद भद्र इति श्रद्धान स तस्य जुगुप्सां करोति। ततो रत्नत्रयमाहात्म्या-रुचिर्युज्यतेऽतिचारः।

परदिट्ठीण पसंसा परशब्दोऽनेकार्थवाची। नापरो ग्राम पाटलिपुत्रादित्यादौ। तथा कचिदन्यार्थे, परे आचार्या अन्ये इत्यर्थे। तथा इष्टार्थे, पर धाम गत इष्टमिति यावत्। इह तु अन्यवाची। दृष्टि श्रद्धा रुचिः परा अन्या दृष्टि श्रद्धा येपा ते परदृष्टयः। तत्त्वदृष्ट्यपेक्षाया अतत्त्वदृष्टिरन्या तेपा प्रशसा स्तुतिः।

अणायदणसेवणा चेव-अनायतन पड्विधं मिथ्यात्व, मिथ्यादृष्टय, मिथ्याज्ञान, तद्वन्त, मिथ्याचारित्र मिथ्याचारित्रवन्त इति तत्र मिथ्यात्वमश्रद्धान तत्सेवाया मिथ्यादृष्टिरेवासौ नातिचारता। मिथ्यादृष्टीना तु सेवा बहु मननं तेपा। मिथ्याज्ञानसेवा नाम निरपेक्षनयदर्शनोपदेश इदमेव तत्वमिति श्रद्धानमुत्पादयामि श्रोतृणामिति क्रियमाणो मिथ्याज्ञानिभि सह सवासः। तत्र अनुरागो वा तदनुवृत्तिर्वा तत्सेवा। मिथ्याचारित्रं नाम मिथ्या-ज्ञानिनामाचरणं तत्रानुवृत्तिर्द्रव्यलाभाद्यपेक्षया द्रव्यालाभोद्येतपु वा सागत्यादिक एतेपा सम्यक्त्वातिचाराणा वर्जन।

---

एवं उत्पन्नं सम्यक्त्वमतिचारपरिहारेण भाव्यमानं महात्म्यं लभते इति सम्यक्त्वातिचारान्निर्दिशति —

मूलारा— शंका — संशयप्रत्ययः किं स्विदित्यनवधारणात्मकः। स चेद् ज्ञानावरणकर्मोदयमात्रप्रवृत्तो विवक्षितो, न मिथ्यात्वकर्मोदयनिमित्तस्तस्यैव निश्चयप्रत्ययाश्रयं दर्शनं प्रति मङ्गत्वोपपत्तेर्नेतरस्य। तस्य सद्दर्शनोपमर्दनात्मक मिथ्यादर्शनविकल्पात्मकत्वेनाग्रे वक्ष्यमाणत्वात्। तथाहि—इदं वस्तुजातं सर्वज्ञेन यथादृष्ट तथैवेति प्रतिपाद्यमानस्यैव यदा स्वस्य श्रुतज्ञानावरणक्षयोपशमविशेपाभावात्, उपदेशकविरहात्तस्य वा सतोऽपि वचनचातुर्यवैधुर्यान्निर्णयकारि श्रुतवचनानुपलब्धेर्वा, काललब्धेरभावाद्वा किमिदमीदृशं वा अन्यदन्यार्थ वा तत्त्वमिति सशयः स्यात्तदा दर्शनस्यातिचारः शंकेति व्यपदिश्यते। यदा पुनरदृष्टेपु सर्वज्ञतैव दुरवधारा अयमेव सर्वज्ञो नेतर इति आगमशरणतायामपि आगमेपु को वस्तुयाथात्म्यानुसारी को वा नेति मिथ्यात्वकर्मपाकपारतंत्र्यात्सशयमभिनिवेशमानस्य तत्त्वाश्रद्धानमुदेति। तदा संशयप्रत्ययोपनीतत्वात्तत्संशयमिथ्यात्वमित्युच्यते। न च संशयोऽस्तीत्येतावतैव दर्शनस्यातीचारो वाच्य ? किं तर्हि प्रवचन गोचराया चलन्त्या प्रतीतौ सत्यामन्यथा छद्मस्थाना समदृष्टीना रज्जूरगस्थाणुपुरुपादिपु किमयं रज्जुरुत सर्पः, स्थाणुः पुरुपो वा किमित्यनेक संशयप्रत्ययो जायते। इति निःशंकत्वं सुदुष्करं स्यात्। तथा अत्राणभयमपि शंकां केचिदाहुः।

तथा चोक्तम् —अहमेको न मे कश्चिदस्ति त्राता जगत्त्रये ॥

इति व्याधिजराक्रान्तिभीतिं शका विदुः पराम् ॥ ६ ॥

कंखा आकाक्षा । सा चेह प्रतिनियतविपयैव ग्राह्या । न तु सार्वत्रिकी, अन्यथा असंयतसम्यग्दृष्ट्यादेरपि स्त्रीवस्त्रालकारभक्तपानादिकमभिलपत सम्यक्त्वमालिन्यमनुपज्येत । ततो दर्शनव्रतदानदेवार्चनतपोजनितपुण्यमाहात्म्यात्कुलं, रूपं, वित्तं, स्त्रीपुत्रादिकं, शत्रूपमर्दनं, स्त्रीत्वं, पुंस्त्वं वा सातिशयं मे भूयादित्याशंसनं दर्शनस्य मल· स्यात् इति मंतव्यम् ।

विदिगिंछा—विचिकित्सा जुगुप्सा। सापि चेह सम्यक्त्वादीनामन्यतमे तद्वति वा कोपादिनिमित्ता न सार्वत्रिकी, इतरथा मिथ्यात्वासंयमादिजुगुप्साया प्रवर्तमानाना सम्यग्दृष्टीना सकलं कुदर्शनत्वं स्यात्ततो न तस्य दर्शनं, ज्ञानं, चरणं वा शोभनं, तद्वानभद्रक· इति च द्वेपपूर्विका मनोवृत्तिर्विचिकित्साख्यो दर्शनदोप एपितव्यः ॥

परदिट्ठीण परा तत्त्वगोचराया दृष्टेरन्या अतत्त्वगोचरा दृष्टि श्रद्धानं येपा ते परदृष्टयः मीमासकतापससांख्यसौगतादय· । अथवा परा अनेकातदृष्टेरन्या दृष्टयः एकान्तदृष्टय परसमया वेदन्यायशास्त्रादयः । पसंसा स्तुतिर्मनोवाक्कायैः सत्कारः ।

अणायदणसेवणा—आयतनं सम्यग्दर्शनादिगुणोद्योतनाद्यागमं तन्वति पृथक् कुर्वन्ति इति आयतनानि सम्यग्दर्शनादीनि त्रीणि । तद्वन्तश्च त्रयस्तेभ्योऽन्यानि अनायतनानि पट्—मिथ्यात्वं, मिथ्याज्ञानं, मिथ्याचारित्रं, मिथ्यादृष्टि मिथ्याज्ञानी, मिथ्याचारित्री चेति । तत्सेवा तत्र मिथ्यात्वस्य सेवा तत्परिणामयोग्यद्रव्याद्युपयोग·, ता च कुर्वन् सम्यक्त्वं निर्मूलयिष्यतीति द्रव्यतो मिथ्यादृष्टिरेवासौ इति कथं न सम्यक्त्वातिचारवान् । अतीत्य चरणं ह्यतिचारो माहात्म्यापकर्षोऽशतो विनाशो वा । श्रीविजयाचार्यस्तु मिथ्यात्वसेवामतिचारं नेच्छति । तथा च तद्ग्रंथो " मिथ्यात्वमश्रद्धानं तत्सेवाया मिथ्यादृष्टिरेवासाविति नातिचारता" इति । मिथ्यादृष्टिसेवा नाम एकान्तग्रहरक्ताना बहुमननं । मिथ्याज्ञानसेवनं पुनरिदमेव तत्त्वमिति श्रद्धानमुत्पादयामि श्रोतॄणामिति क्रियमाणो निरपेक्षनयदर्शनोपदेशः । मिथ्यज्ञानिसेवा मिथ्याज्ञानिभि· सह संवासस्तत्रानुरागस्तत्रानुवृत्तिर्वा । मिथ्याचारित्रसेवा द्रव्यलाभाद्यपेक्षया मिथ्याज्ञानिनामाचरणस्यानुवर्तन मिथ्याचारित्रिसेवा पंचाग्निसाधकादिपु संगत्यादिकं, एताः पंच सम्यक्त्वातिचाराः शंकादयः पंच त्याज्याः । सम्यक्त्वाराधकैरिति सम्बंधः सामर्थ्यात्सिद्धो वोद्धव्यः ।

सम्यग्दर्शन निरतिचार और गुणोंसे उज्ज्वल करनेका अभ्यास करना चाहिये. इसका आचार्य विस्तारसे वर्णन करते हैं. प्रथमतः सम्यग्दर्शनके अतिचारोंका वर्णन करते हैं.—

हिंदी अर्थ—शंका, कांक्षा, विचिकित्सा, परदृष्टिप्रशंसा व अनायतनसेवन ऐसे सम्यक्त्वके पांच अतिचार हैं.

विशेषार्थ—वस्तुका स्वरूप यह है अथवा यह है ऐसा अनिश्चयात्मक जो ज्ञान उसको शंका कहते हैं. यह शंका निश्चयज्ञानका आश्रय करनेवाले सम्यक्त्वको मलिन करती है.

शंका—यदि सम्यग्दर्शन हो तो उसका शंका अतिचार मानना योग्य है. परंतु संशय मिथ्यापनाको धारण करता है अर्थात् संशय स्वयं मिथ्यात्व ही है मिथ्यात्वोंके भेदोंमें आचार्योंने संशयकी भी गणना की है. 'संशयित, अभिग्रहित और अनभिग्रहित ऐसे मिथ्यात्वके तीन भेद हैं,' ऐसे आगममें उल्लेख पाये जाते हैं.

उत्तर—आपका कहना ठीक है. संशयके सद्भावमें भी सम्यक्त्व रहताही है. अतएव संशयको अतिचारपना मानना युक्तियुक्त है. इसका स्पष्टीकरण ऐसा है–अपनेमें श्रुतज्ञानावरणीय कर्मका विशिष्टक्षयोपशम न होना, विद्वान् उपदेशकका अभाव रहना, अथवा उपदेशक होकर भी उसमें वचनचातुर्यका अभाव रहना, संशय दूर करनेवाले आगमके वचन न मिलना, अथवा उसका अभाव रहना, कललब्धिकी प्राप्ति न होना इत्यादि कारणोंसे वस्तुस्वरूपका निर्णय नहीं होता है. तो भी जैसा सर्वज्ञ जिनेश्वरने वस्तुस्वरूप जाना है वह वैसाही है ऐसी मैं श्रद्धा रखता हूं ऐसी भावना करनेवाले भव्यके सम्यक्त्वकी हानि कैसी होगी अर्थात् शंका नामके अतिचारसे उसका सम्यग्दर्शन समल होगा परंतु नष्ट न होगा.

उपर्युक्त श्रद्धासे जो रहित है वह हमेशा संशयाकुलही रहता है. वास्तविक तत्त्वस्वरूप क्या है? उसको कौन जानता है कुछ निर्णय कर नहीं सकते ऐसी उसकी मति रहती है. कपिल, बुद्ध वगैरे सर्वज्ञ थे इसका निर्णय नहीं होता है. यदि अर्हन् सर्वज्ञ होता है कपिलादि सर्वज्ञ नहीं होते हैं ऐसा मानकर आगमके द्वारा निर्णय मानना भी वह संशयमिथ्यात्वी कबूल नहीं करता है. कोनसा आगम वस्तुके यथार्थस्वरूपका प्रतिपादन करता है और कोनसा नहीं यह भी निर्णीत नहीं है अर्थात् आगमके विषयमें भी संशय है ऐसा संशयमिथ्यात्वी कहेगा. इसलिये उसकी तत्त्वके ऊपर अश्रद्धा संशयज्ञानसे सहित होनेसे वह संशय मिथ्यात्वही है. तत्त्वोंके उपर अश्रद्धान होना यह

मिथ्यात्वका लक्षण है इसका आगे आचार्य विवेचन करेंगे. इस संशयमिथ्यात्वमें सच्चे तत्त्वके प्रति अरुचि भाव रहता है. यह मिथ्यात्व मिथ्याज्ञानसे भिन्न वस्तु है. 'मिच्छाणाण मिच्छादंसण मिच्छाचारित्तादो पडिविरदो मीति' अर्थात् मिथ्याज्ञान, मिथ्यादर्शन और मिथ्याचारित्र इनसे मैं विरक्त हुवा हूं, इस वाक्यसे मिथ्याज्ञान और मिथ्यादर्शन ये भिन्न चीजें हैं ऐसा सिद्ध होता है.

छद्मस्थोंको भी दोरी, सर्प, खुंट, मनुष्य इत्यादि पदार्थोंमें यह रज्जू है ? या सर्प है ? यह खूट है या मनुष्य है इत्यादि अनेक प्रकारका संशय उत्पन्न होता है. तो भी वे सम्यग्दृष्टि ही है. इतने विवेचनका सारांश यहां ऐसा समझना चाहिये—

मिथ्यात्व कर्मके उदयसे सर्वत्र संशयरूपही तत्वोंमें अरुचि पैदा होती है; इस अरुचिको संशयज्ञानका सहाय मिलता है इसलिये इसको संशयमिथ्यात्व कहते हैं. आगमकथित जीवादिक पदार्थोंमे ज्ञानावरणकर्मके उदयसे और सम्यक्त्वप्रकृतिके उदयसे जो यह वस्तु स्वरूप है या यह है ऐसी जो चंचल मति होती है उसको शंका अतिचार कहते हैं यह अतिचार सम्यग्दर्शनको मलिन बनाता है इस लिये यह अतिचार है. दोरी, साप, पुरुष, खूट इत्यादिकोंमे जो संशय होता है वह यदि अतिचाररूप माना जावेगा तो सम्यग्दर्शनका निःशंकितांगही दुर्लभ हो जायगा.

कांक्षा—इष्ट पदार्थोंपर जो आसक्ती अथवा लंपटता होती है उसको कांक्षा कहते हैं. यह कांक्षा सम्यग्दर्शनका अतिचार है.

शंका – यदि कांक्षाको अतिचार कहते हो तो आहारमें अभिलाषा उत्पन्न होती है. स्त्री, वस्त्र, अत्तर, पुष्पहार, अलंकारादिकोंमें असंयत सम्यग्दृष्टिको और विरताविरत अर्थात् अहिंसाद्यणुव्रत पालनेवालोंको अभिलाषा उत्पन्न होती है. छठे गुणस्थानवर्ती मुनीकोभी जब वे क्षुधादि परीषहोंसे व्याकुल होते हैं तब आहारमें, पेयपदार्थोंमें अभिलाषा उत्पन्न होती है. इसलिये उनके सम्यग्दर्शनमें भी यह अतिचार उत्पन्न होगा. सभी भव्योंको सुखोंकी इच्छा रहेगी ही अत· इच्छाको अतिचार मानना युक्तियुक्त हे नहीं.

उत्तर केवल इच्छाको अतीचार हम भी मानते नहीं. किंतु इस सम्यग्दर्शनके प्रभावसे, दानके सामर्थ्यसे, देवपूजा और तपश्चरणके शक्तीसे मेरेको जो पुण्य उत्पन्न हुवा है उससे कुल, रूप, ऐश्वर्य, स्त्री पुत्रादिक,

शत्रुका नाश, ऐसे सर्वोत्कृष्ट पदार्थोंकी प्राप्ति हो. सातिशय स्त्रीपना, माहात्म्ययुक्त पुरुषपना मेरेको प्राप्त हो ऐसी अभिलाषा रखना सम्यग्दर्शनका अतिचार है ऐसा यहां समझना.

विचिकित्सा — जुगुप्सा, तिरस्कार इनको यदि अतिचार कहोगे तो मिथ्यात्व, असंयम इत्यादिकोंमें जुगुप्सा-तिरस्कार होता है वह भी अतिचार है ऐसा मानना पडेगा.

उत्तर—यहां भी कांक्षाके समान जुगुप्साका विषय नियत समझना चाहिये. अर्थात् नियत विषयसंबंधी जुगुप्साही अतिचार है ऐसा समझना चाहिये.

रत्नत्रयमेंसे किसी एकमें अथवा रत्नत्रयधारकोंमें कोपादिकसे जुगुप्सा होना यहां सम्यग्दर्शनका अतिचार है. इस जुगुप्साके वश होकर सम्यग्दृष्टि जीव अन्य भव्यके ज्ञान, दर्शन वा आचरणका तिरस्कार करता है. जिसमें ये सम्यग्दर्शनादिक निरतिचार है ऐसे पुरुषका वह तिरस्कार करता है. अत: ऐसी जुगुप्सासे रत्नत्रयके माहात्म्यमें अरुचि होनेसे इसको अतिचार समझना योग्य है.

परदृष्टिप्रशंसा अतिचार-यहां पर शब्दके अनेक अर्थ है. जैसे ' नापरोः ग्रामः पाटलिपुत्रात् पाटलिपुत्रसे और दुसरा गांव नहीं है. यहां अपर शब्द अन्य वाची है. ' परे आचार्या ' अन्ये आचार्याः ' अर्थात् दूसरे आचार्य यहां ' पर ' शब्दका अर्थ ' अन्य ' ऐसा समझना. इष्टार्थमें भी पर शब्दका प्रयोग होता है जैसे परं धाम गतः अर्थात् इष्ट स्थानको वह चला गया. प्रस्तुत प्रकरणमें पर शब्द अन्यार्थवाची है. तत्वदृष्टीसे-पारमार्थिक दृष्टीसे विपरीत दृष्टि जिनकी है ऐसे सांख्य, बौद्ध, जैमिन्यादि मतके विद्वानोंको परदृष्टि कहते हैं. उनकी प्रशंसा करना यह सम्यग्दर्शनका मल है.

अनायतनसेवना — अनायतनके छह भेद हैं. अर्थात् मिथ्यात्व, मिथ्यादृष्टि जन, मिथ्याज्ञान, मिथ्या ज्ञानी, मिथ्याचारित्र और मिथ्याचारित्रवान्. इन छहोंमेंसे मिथ्यात्व अनायतनका अर्थ अतत्त्वश्रद्धान ऐसा होता है. यदि भव्य जीव मिथ्यात्वकी सेवा करेगा तो वह मिथ्यात्वीही होगा, सम्यग्दर्शनही उसका नष्ट हो गया ऐसा समझना शाहिये. इसलिये ' मिथ्यात्व ' यह सम्यग्दर्शनका अतिचार नहीं है. वह अनाचार है. मिथ्यादृष्टिसेवा— मिथ्यादृष्टियोंको अच्छा समझकर उनका आदर करना. मिथ्याज्ञानसेवा-मिथ्यामतके तत्व अच्छे हैं ऐसी भावना श्रोतृवर्गके मनमें मैं उत्पन्न करूंगा ऐसा विचार करके नयोंकी अपेक्षा छोडकर मिथ्यात्वका उपदेश करना.

मिथ्याज्ञानिसेवा—मिथ्याज्ञानियोंके साथ सहवास रखना, उनमें प्रेम रखना, उनका अनुसरण करना.

मिथ्याचारित्र—मिथ्याज्ञानिओंका आचरण देखकर वैसा स्वयं आचरण रखना, उसका अनुसरण करना. उनसे द्रव्य लाभ होगा इस अपेक्षासे उनका सहवास करना ऐसे सम्यक्त्वके अतिचारोंका त्याग करना चाहिये.

---

गुणान्दर्शनविशुद्धिकारिणो निरूपयति—

उवगूहणाठिदिकरणं वच्छल्लपभावणा गुणा भणिदा ॥
सम्मत्तविसोधीए उवगूहणकारया चउरो ॥ ४५ ॥

उपबृंहः स्थितीकारो वत्सलत्वं प्रभावना ॥
चत्वारोऽमी गुणाः प्रोक्ताः सम्यग्दर्शनवर्द्धकाः ॥ ४८ ॥

विजयोदया—उवगूहणमित्यनया । उपबृंहण नाम वर्द्धन । बृह बृहि वृद्धाविति वचनात् । धात्वर्थानुवादी चोपसर्ग' उप इति । स्पष्टेनाग्राम्येण श्रोत्रमन.प्रीतिदायिना वस्तुयाथात्म्यप्रकाशनप्रवणेन धर्मोपदेशेन परस्य तत्त्वश्रद्धान-वर्द्धन उपबृंहण। सर्वजनविस्मयकारिणीं शतमखप्रमुखगीर्वाणसमितिविरचितोपचितिसदृशीं पूजा सपाद्य दुर्धरतपो योगानुष्ठानेन वा आत्मनि श्रद्धास्थिरीकरणम् ।

जीवादीनि द्रव्याणि तत्सामान्यविशेषरूपाध्यासितानि उत्पादव्ययध्रौव्यात्मकानि प्रतिसमयमिति जिनै सम्यगभाणि एवमेव नान्यथा श्रद्धेयं जिनाना मत । न हि जिना वीतरागा विदितासिलवेद्यतया याथातथ्या कृपाप-रिगता. विपरीतमुपदिशतीति भावनया स्थिरीकरण अस्थिरस्य रत्नत्रये स्थिरतापादन । मिथ्यात्वाभिमुखस्य सम्यग्द-ष्टेरस्थिरस्य मिथ्यात्व मूलमेव तदनुभवत कर्मादान, मिथ्यादर्शनाविरतिप्रमादकषाया हि बंधहेतव । तद्बधहेतुक चान-तससारपरिभ्रमण चतुरशीतियोनिशतसहस्रेषु । सद्दर्शन तु विचित्रायातनासकटभयप्रदायिन्योर्नरकतिर्यग्गतिवर्ति-न्योर्वज्रार्गलीभूत । शतमखमनुष्यलोकयोरन्यूनमान्यरूपभोगादिसंपत्सपादनचतुर क्रमेण निर्वाणमपि प्रयच्छति । ततो दु.खजलवाहिनीं मिथ्यादृष्टिकुल्यामुल्लंघ्य, प्रतिपद्यस्व जैनीं दृष्टिमिति तत्र स्थिरताकरणम् । तथा सम्यग्ज्ञानभावना-या च प्रमादिनमलसं दृष्ट्वा एवमसौ वक्तव्य. । ज्ञानं हिताहितप्रकाशनपटु, तदतरेण हितमजानत. कथं तत्र वृत्तिरहि-तपरिहारो वा । हिताहितप्राप्तिपरिहारौ विना न सुखाधिगमदु खविश्लेषौ। तदर्थमेव चाय प्राज्ञो जन क्लिश्यति । तत. पचविधस्वाध्यायत्यागं मा कृथा' इति ज्ञाने स्थिरीकरणं। अथवा अनधिगतसूत्रार्थनिश्चयस्य तत्र निश्चयसंपादन । अस-कृद्भावनात्मन. स्थिरीकरण । चारित्रात् प्रच्यवमानं दृष्ट्वा हिंसादिसावद्यक्रियाया प्रवर्तमाना इहैव दु खभाजो दृश्यन्ते,

तथा परं हन्तुमुद्यत' स्वयं तेनैव वा हन्यते प्राक्तनमित्रैर्वंधुमिर्वोदीर्णवैरैः । परत्राशुभां गतिमुपैति । दुःखदाय्यसद्वेद्यं च बध्नाति । अलीकं ब्रुवन्निहैव वंधुजनस्यापि विद्वेष्योऽविश्वास्यश्च भवति किं पुनरन्यस्य । जिव्हां चोत्पाटयंति क्रुद्धा वलिन । परत्र च मूकता यास्यति इत्येवमाद्यसयमगतदोष प्रख्याप्य नीरोगता, दीर्घजीवन, सौरूप्यं, प्रियवचनादिकं गुणमुपादिश्य अहिंसादिव्रताचरणफलं चारित्रे स्थिरीकरणम् । असंयमदोषं संयमगुणं वा पुनः पुन. स्मृत्वात्मन स्थिरीकरणं।

धर्मस्थेपु मातरि पितरि भ्रातरि वानुरागो वात्सल्यं, रत्नत्रयादरो वात्मन. । प्रभावना माहात्म्यप्रकाशन रत्नत्रयस्य तद्वता वा ।

एवमतिचारनिरासेन विशुद्धस्य सम्यग्दर्शनस्य वृद्धिकारिणो गुणानुपदिशतिः—

मूलारा—उवगूहण —स्वयमकलंकस्य मार्गस्य वालाशक्तजनाश्रयवाच्यतानिरासः । टीकाकारास्तु उवगूहणेत्यस्य 'उपबृंहणं—वर्द्धन' मित्यर्थमकथयत् । तच्च परस्य स्पष्टाग्राम्यश्रवणमनःप्रीतिकरतत्त्वप्रकाशनपरधर्मोपदेशेन तत्त्वश्रद्धानस्फारीकरणं । स्वस्य च शक्रनिर्मितसपर्यासोदर्यपूजाविशेषेण, दुर्द्धरतपोयोगानुष्ठानेन, जिनेंद्रोपज्ञश्रुतज्ञानातिशयभावनया वा श्रद्धानवर्द्धन ॥

ठिदिकरणं स्वस्य परस्य वा सम्यक्त्वाद्यन्यतमात्प्रच्यवमानस्य पुनस्तत्रैव युक्तिबलाद्दृढमवस्थापनम् । तथाहि-दैवात्प्रमादाद्वा मिथ्यात्वमभिपतंतमात्मानं स्वसंवित्त्या परं वा तदनुरूपवाक्चेष्टाभ्या निश्चित्यैवं ब्रूयात् । ' मा स्म भोः दुस्सहदु खोर्मिनिकरव्यतिकीर्णसंसारार्णवपरिवर्तनैककार्यक्रमनिर्माणसूत्रधारे सुदुर्निवारेऽस्मिन्मिथ्यात्वमहावैरिणि पुनर्व्यतिपजः । परिष्वजस्व सरभसममंदानंदसंदोहमुन्मुद्रयन्ती निःसीमसुखसर्वस्वपर्यवसानविलासा सम्यग्दृष्टिं प्रेयसीमिव । मा स्म विस्मरस्तास्ताश्चतुर्गतियातनायातुधानी । एवं दूषणगुणगणाविष्करणेन श्रुतज्ञानभावनाया प्रमाद्यंतं चारित्राद्भ्रश्यन्तं स्वं परं वा पुनस्तत्रैव स्थिरीकुर्यात् ।

वच्छल्ल—धर्मस्थेपु धेनो. स्ववत्स इव स्नेहः, स्वस्य च रत्नत्रयेऽनुराग' ॥ पहावणा—रत्नत्रयस्य तद्वता च माहात्म्यप्रकाशनं ॥ उवगूहणकारया वृद्धिकराः अत एव सेव्या इति प्रतिपत्तव्यम् ॥

अब आचार्य सम्यग्दर्शनको वृद्धिंगत करनेवाले गुणोंका वर्णन करते हैं—

हिंदी अर्थ—उपगूहन, स्थितीकरण, वात्सल्य और प्रभावना ये चार गुण सम्यक्त्वको निर्मल करनेवाले और उसको बढानेवाले हैं.

विशेपार्थ—उपगूहन–उपगूहन अथवा उपबृंहण ऐसे इस गुणके दो नाम हैं. उपबृंहण इसका अर्थ बढाना ऐमा होता है. 'बृह बृहि वृद्धौ' इस धातूसे बृंहण शब्दकी उत्पत्ति होती है. उप इस उपसर्गके योगसे बृह धातूका अर्थ बदला नहीं है. स्पष्ट, अग्राम्य, कान और मनको प्रसन्न करनेवाला, वस्तूकी यथार्थता भव्योंके आगे दर्पणके समान दिखानेवाला, ऐसे धर्मोपदेशके द्वारा तत्त्वश्रद्धान बढाना यह उपबृंहण गुण है.

उपबृंहण—इंद्र प्रमुख देवोंके द्वारा जैसी महत्वयुक्त पूजा की जाती है वैसी जिनपूजा करके अपनेको जिनधर्ममें, जिनभक्तिमें स्थिर करना, अथवा दुर्धर तपश्चरण वा आतापनादि योग धारण करके अपने आत्मामें श्रद्धा गुण उत्पन्न करना इसको भी उपबृंहण कहते हैं.

स्थितिकरण — जीवादिक पदार्थ सामान्य और विशेप धर्मोंसे युक्त हैं अर्थात् चेतनत्व, स्पर्शादिमत्त्व, गतिमें हेतु होना इत्यादि विशेप धर्म और अस्तित्व, वस्तुत्व, प्रमेयत्व, द्रव्यत्व, इत्यादि सामान्य धर्मोंसे युक्त हैं. जीवादि छहो द्रव्योंमें उत्पाद, व्यय, और ध्रौव्य यह स्वरूप सदाही प्रतिसमय रहता है ऐसा जिनोपदेश है और वह बिलकुल सच्चा है ऐसी मेरी श्रद्धा है. मैं इससे उलटी श्रद्धा धारण नहीं करूंगा. जिनेश्वर वीतराग है अर्थात् रागद्वेप, क्षुधा तृपादि अठारह दोपोंसे वे पूर्ण अलिप्त हैं. उनमें संपूर्ण पदार्थ जाननेवाला ज्ञान है. अतः वे कभी भी विपरीत उपदेश नहीं देते हैं. भव्यजीवोंका संसारसे उद्धार करनेका प्रयत्न करनेवाले जिनभगवान् क्या वस्तुका विपरीत स्वरूप कहेंगे ? ऐसी भावनाओंसे अपनेको जैन धर्ममें स्थिर करना यह स्थिती करण है.

जो भव्य रत्नत्रयमे चलित हुवा हो तो उसको फिर रत्नत्रयमें स्थिर करना चाहिये. जो सम्यग्दृष्टि भव्य सम्यग्दर्शनसे भ्रष्ट होकर मिथ्यात्वी बननेके स्थितीमें आरहा हो तो फिर उसको सम्यग्दर्शनमें स्थिर करना चाहिये.

"मिथ्यात्वही कर्मग्रहण करनेका मूल कारण है. मिथ्यात्व, अविरति प्रमाद, कपाय और योग ये कर्मबंधन के कारण हैं. इन कारणोंसे जीवको अनंत संसारमें भ्रमण करना पडता है. चौरासी लक्ष योनियोंमें इन ही कारणोंसे जीव भ्रमण करता है. परंतु जब जीवको सम्यग्दर्शनकी प्राप्ति होती है तब नानाप्रकारकी यातनाओंकी उत्पत्ति करनेवाली तिर्यग्गति और नरकगति टल जाती है. अर्थात् सम्यग्दर्शन धारण करनेवाला मनुष्य तिर्यंचोंमें और नरकोंमें उत्पन्न नहीं होता है. स्वर्गलोकके और मनुष्यलोकके अनुपम भोग, मान्यता, सोख्य वगैरह उत्कृष्ट पदार्थ

यह सम्यग्दर्शन जीवोंको अर्पण करता है. और अन्तमें यह जीवको मोक्ष भी प्रदान करता है. अतः दुःखरूपी जल जिसमें बहता है ऐसी मिथ्यादर्शनरूपी नदीको तू लांघकर जैनधर्मको धारण कर " ऐसे उपदेशसे मिथ्यादर्शनसे हटा कर लोकोंको जैनधर्ममें स्थिर करना चाहिये. यह भी स्थितीकरण है.

जो भव्य सम्यग्ज्ञानकी आराधना करनेमें प्रमादी और अलसी बन गया है उसको सम्यग्ज्ञानमें आगे लिखे हुए वचनोंसे स्थिर करना चाहिये—ज्ञान ही हित और अहितका स्वरूप दिखानेमें प्रवीण है. विना ज्ञानके मनुष्योंको हित और उसके उपायोंका स्वरूप अवगत नहीं होता है. इसलिये वह अहितसे हटकर हितमें प्रवृत्ति नहीं कर सकेगा. जबतक जीव हितकी प्राप्ति और अहितका परिहार न करेगा तबतक उसको सुख न मिलेगा और वह दुःखोंसे मुक्त न होगा. सर्व विद्वान लोक सुखकी प्राप्तिके लिये और दुःख दूर करनेके लिये ही प्रयत्न करते हैं. सुख प्राप्तीके लिये हे भव्य ! तूं पांच प्रकारका स्वाध्याय कर. उसका त्याग करनेसे तेरी आत्मोन्नति नहीं होगी. ऐसे उपदेशसे उसको सम्यग्ज्ञानमें स्थिर करना चाहिये. अथवा जिसको आगमके सूत्रार्थका निश्चय नहीं हुवा हो तो उसको उसका परिज्ञान कर देना चाहिये.

सम्यग्ज्ञानका वारंवार अभ्यास करके स्वतः भी उसमें स्थिर होना चाहिये.

चारित्रसे भ्रष्ट होते हुए भव्यको देखकर उसमें उसको स्थिर करनेके लिये यह उपदेश उपयुक्त है—

हिंसा, चोरी, असत्य बोलना इत्यादि पापोंमें जो मनुष्य प्रवृत्त होते हैं उनको इस लोकमेंही बहुत दुःख भोगने पडते हैं. दुसरोंको मारनेका प्रयत्न करनेवाला मनुष्य स्वयं दुसरोंसे मारा जाता है. जो पूर्वकालमें उसके मित्र अथवा संबंधी थे वे भी उसके वैरी बनते हैं. पाप करनेवाले मनुष्य मरकर अशुभ गतिको अपनाते है. पापोंमें असाता वेदनीय कर्म बंधता है.

जो अदमी झूट बोलते हैं उनके बंधुगण भी शत्रु बनते है. वे भी उसके ऊपर विश्वास नहीं रखते हैं. फिर दुसरे शत्रु अविश्वास रखनेवाले होंगे इसमें आश्चर्यही क्या है. असत्य बोलनेवालेकी जिह्वा क्रुद्ध बलिष्ठ लोक उखाड देते हैं. झूट बोलनेका फल यह है कि वे परलोकमें गूंगे हो जाते हैं. इस तरहसे असंयमके दोष बतलाकर हिंसादिक पाप न करनेवाले भव्यगण नीरोग, दीर्घजीवी, सुंदर, प्रिय और मधुरभाषी होते हैं. प्रिय वचनादिक गुण उनको प्राप्त होते हैं. ऐसा उपदेश करना चाहिये.

अथवा असंयमके दोप और संयमके गुणोंका वार बार स्मरण कर चारित्रमें स्वतःको स्थिर करना चाहिये. यह सब स्थितिकरण गुणका विवेचन हुआ.

वात्सल्य—धार्मिक लोगोंपर और माता, पिता, भ्राता इनके ऊपर प्रेम रखना यह वात्सल्य गुण है. अथवा रत्नत्रयमें आदर करना यह भी वात्सल्य है.

प्रभावना—रत्नत्रयका और उसके धारक श्रावक और मुनिगणका महत्त्व बतलाना यह प्रभावना गुण है. ऐसे गुणोंसे सम्यक्त्व वृद्धिंगत होता है.

---

दर्शनविनयप्रतिपादनार्थं गाथाद्वयमुत्तरम्—

अरहंतसिद्धचेइय सुदे य धम्मे य साधुवग्गे य ॥
आयरिय उवज्झाए सुपवयणे दंसणे चावि ॥ ४६ ॥

जिनेशसिद्धचैत्येषु धर्मदर्शनसाधुषु ॥
आचार्येऽध्यापके संघे श्रुते श्रुततपोधिके ॥ ४९ ॥

विजयोदया—अरहंत इत्यादिकम् । अरिहननाद्रजोहननाद्रहस्याभावादतिशयपूजार्हत्वाच्चाधिगतार्हद्व्यपदेशा नोआगमभावार्हन्त इह गृहीता । न नामार्हन्, निमित्ताभावेऽपि पुरुषाकारान्नियुक्तार्हद्व्यपदेश. । अर्हतां प्रतिबिंबानि सोऽयमित्यभिसंबधादर्हद्व्यपदेशभाजि पूजातिशयार्हत्वेपि अरिहननादिगुणासंभवान्नेह गृह्यन्ते । आगमद्रव्यार्हन्नर्हत्स्वरूपव्यावर्णनपरप्राभृतज्ञोऽनुपयुक्तस्तदर्थेऽन्यत्र व्यापृत ।ज्ञायकशरीरार्हन्नाम तत्प्राभृतज्ञस्य त्रिकालगोचर शरीरं। यस्मिन्नात्मनि अरिहननाद्यो भविष्यति गुणा स भाव्यर्हन् । तीर्थकरनामकर्मतद्व्यतिरिक्तद्रव्यार्हन्। अर्हद्व्यावर्णनपरप्राभृतप्रत्ययोऽर्हन्निर्भासो बोध आगमभावार्हन्। एतेषु अरिहननादिगुणानामभावात् नेहार्हच्छब्देन ग्रहणम् ।

एवं नामसिद्ध' अलब्धसकलात्मस्वरूपे सिद्धशब्द । यस्य वा निमित्तनिरपेक्षा सिद्धसंज्ञा । स्थापनासिद्धा इति तत्प्रतिबिंबानि उच्यन्ते । ननु सशरीरस्यात्मन. प्रतिबिंबं युज्यते, अशरीराणा तु शुद्धात्मना सिद्धाना कथ प्रतिबिंब संभव ? पूर्वभावप्रज्ञापननयापेक्षया शरीरमनुगतो य आत्मा सयोगकेवलीतरो वा न शरीराद्विभक्तु शक्यते। विभागे हि शरीरात्संसारिता न स्यात्। अशरीर. संसारी चेति विरुद्धमेतत् । तत शरीरसंस्थानवच्छिदात्मापि संस्थानवानेव संस्थानवतोऽव्यतिरिक्तत्वाच्छरीरस्थात्मवत् । स एव चायं प्रतिपन्नसम्यक्त्वाद्यष्टगुण इति स्थापनासंभव. । आगम द्रव्यसिद्ध. सिद्धप्राभृतज्ञ सिद्धशब्देनोच्यते अनुपयुक्त. । सिद्धप्राभृतज्ञस्य शरीरं ज्ञापकशरीरं । भविष्यत्सिद्धत्वपर्यायो

भाविसिद्धः। व्यतिरिक्तः सिद्धो न संभवति । सिद्धत्वं न कर्मकारणम् इति सकलकर्मापायहेतुका सिद्धता। पुद्गलद्रव्यस्य तदुपकारिणोऽसंभवान्नोकर्मसिद्धाभाव' । सिद्धप्राभृतानुसारिसिद्धज्ञानपरिणत आगमभावसिद्ध. । निरस्तभाव द्रव्यकर्ममलकलङ्क.परिप्राप्तसकलक्षायिकभाव नोआगमभावसिद्ध. स इह गृहीतो न इतरे सकलात्मस्वरूपप्राप्त्यभावात्।

चेदिय चैत्य प्रतिबिंबं इति यावत् । कस्य ? प्रत्यासत्ते. श्रुतयोरेवार्हत्सिद्धयोः प्रतिबिंबग्रहणं। अथवा मध्य प्रक्षेप. पूर्वोत्तरगोचरस्थापनापरिग्रहार्थस्तेन साध्वादिस्थापनापि गृह्यते।

श्रुतज्ञानावरणक्षयोपशमाज्जातं वस्तुयाथात्म्यग्राहि श्रद्धानानुगतं श्रुतं अंगपूर्वप्रकीर्णकभेदभिन्नं, तीर्थकर श्रुतकेवल्यादिभिरारचितो वचनसंदर्भो वा, लिप्यक्षरश्रुत वा।

धर्मशब्देन चारित्रं समीचीनमुच्यते। ज्ञानदर्शनाभ्यामनुगतं सामायिकादि पंचविकल्पम् । दुर्गतिप्रस्थित जीवधारणात्, शुभे स्थाने वा दधाति इति धर्मशब्देनोच्यते। अथवा

'खंती मद्दव अज्जव लाघव तव संजमो आकिंचणदा॥
तह होदि बम्भचेरं सच्चं चागो य दस धम्मा॥

इति सूत्रातरनिर्दिष्टधर्मपरिग्रहः । क्रोधनिमित्तसान्निध्येऽपि कालुष्याभावः क्षमा स्नेहकार्याद्यनपेक्ष' । जात्याद्यभिमानाभावो मानदोषानपेक्षश्च दृष्टकार्यानपाश्रयो मार्दवम् । आकृष्टान्तद्वयसूत्रवद्वक्रताभाव' आर्जवमित्युच्यते । द्रव्येषु ममेदं भावमूलो व्यसनोपनिपातः सकल इति ततः परित्यागो लाघवं। अशनादिपरित्यागात्मिका क्रिया अनपेक्षित दृष्टफला द्वादशविधा तप । इंद्रियविषयरागद्वेषाभ्या निवृत्तिरिंद्रियसंयम । षड्जीवनिकायबाधाऽकरणादपरः प्राणि संयमः। आकिंचनता सकलग्रंथत्यागः। ब्रह्मचर्यं नवविधब्रह्मपालन। सता साधूनां हितभाषणं सत्यम्। संयतप्रायोग्याहारादिदानं त्याग'। एते दशधर्मा. ।

साधयन्ति रत्नत्रयमिति साधवस्तेषा वर्ग. समूह । तस्मिन्वस्तुयाथात्म्यग्राहिज्ञाने परिणतिर्ज्ञानाचार.। तत्त्वश्रद्धानपरिणामो दर्शनाचार. । पापक्रियानिवृत्तिपरिणतिश्चारित्राचार. । अनशनादिक्रियासु वृत्तिस्तप आचार' । स्वशक्त्यनिगूहनरूपा वृत्तिर्ज्ञानादौ वीर्याचार एतेषु पंचस्वाचारेषु ये वर्तन्ते परांश्च वर्तयंति ते आचार्या. । रत्नत्रयेषु उद्यता जिनागमार्थं सम्यगुपदिशति ये ते उपाध्याया.। उपेत्य विनयेन ढौकित्वा अधीयते श्रुतमस्मादित्युपाध्याय. ।

पवयणे प्रवचने। ननु श्रुतशब्द. प्रवचनवाची तत पुनरुक्तता ? रत्नत्रयं प्रवचनशब्देनोच्यते। तथा चोक्तम्— 'णाणदसणचरित्तमेगं पवयणमिति' अथवा श्रुतज्ञानं श्रुतमित्युक्त पूर्वमिह तु प्रोच्यते जीवादयः पदार्था इति शब्दश्रुतमुच्यते। दसणे सम्यग्दर्शने च॥ ४६॥

दर्शनविशुद्धिविवृद्ध्यर्थं तद्विनयं गाथाद्वयेनाह—

मूलारा—चेदियप्रतिबिंबानि मध्ये पाठादर्हदादीना पंचानामपि । सुदे भावश्रुते ज्ञानात्मके। धम्मे चारित्रे, उत्तमक्षमादौ वा। पवयणे रत्नत्रयेऽथवा द्रव्यश्रुते शब्दात्मके लिप्यक्षरे वा॥

दर्शनविनयका विवेचन आचार्य दो गाथाओंसे करते हैं—

हिंदी अर्थ—अरहंत, सिद्ध, अर्हत् और सिद्धोंकी प्रतिमायें, श्रुतज्ञान, जिनधर्म, आचार्य, उपाध्याय व साधु परमेष्ठी, रत्नत्रय, आगम और सम्यग्दर्शन इनमें भक्ति, पूजा, करना. इनमें अन्यमतीयोंने आरोपित किये दोषोंको हटाना, इनका महत्त्व बताना, इत्यादि बातोंसे दर्शनविनय होता है.

विशेषार्थ—जिन्होंने अरिहनन किया अर्थात् मोहनीय कर्मका नाश किया, रजोहनन अर्थात् ज्ञानावरण और दर्शनावरणको नष्ट किया, रहस्यहनन अर्थात् अन्तराय कर्मका घात किया तथा इन्द्रादिकोंके द्वारा जो सातिशय पूजाको प्राप्त हुए इस लिये जो नो आगमभाव निक्षेपसे अर्हन्त इस नामको प्राप्त हुए हैं उनकोही प्रकृत विषयमें अर्हन् समझना चाहिये. चार घातिकर्मोंका नाश होनेसे जिनको अर्हतकी अवस्था साक्षात् प्राप्त हो गई वेही यहां अर्हन्त माने हैं. केवल जो नामसे ही अर्हत हैं वे यहां अर्हन्त नहीं समझे जायेंगे. निमित्त न होनेपरभी मनुष्यके प्रयत्नसे जिसमें अर्हत् ऐसा नामकरण विधि होता है उसको नामर्हत् कहते हैं. अर्हन्त की प्रतिमामें वही यह अर्हत् है ऐसे संकल्पसे जो स्थापना की जाती है वह ' स्थापनार्हत् है. स्थापनारूप अर्हत् में पूजातिशय होनेपर भी अरिहननादि गुण अर्थात् मोहनीयादि चार घातिकर्मोंका नाश करनेका गुण नहीं है. अतः स्थापनार्हत् भी प्रकृत विषयमें उपयुक्त नहीं है. अर्हन्तके स्वरूपका वर्णन करनेवाले शास्त्रका जिसको अच्छा ज्ञान है परंतु उस तरफ जिसका सांप्रत उपयोग नहीं लगा है, दुसरे तरफ जिसका चित्त लगा है ऐसे पुरुषको द्रव्यनिक्षेपसे अर्हत् कहते हैं. अर्हत्के स्वरूपका वर्णन करनेवाले शास्त्रको जाननेवाले विद्वानका जो त्रिकालवर्ती शरीर वह ज्ञायकशरीर अर्हत् है. जिस आत्मामें भाविकालमें अरिहननादिक अर्हन्तके गुण उत्पन्न होंगे ऐसे आत्माको सांप्रतमें अर्हत् कहना यह भावि अर्हत् है. तीर्थकरनामकर्मको तद्व्यतिरिक्त अर्हत् कहते हैं. अर्हन्तके स्वरूपका प्रतिपादन करनेवाले शास्त्रका ज्ञान जिसको है और वर्तमान कालमें वह ज्ञान अर्हत्स्वरूपका विचार कर रहा हो तो उसको आगमभावार्हन् कहते हैं.

नो आगमभावार्हन्तके शिवाय नामादि अर्हन्तोंमें अरिहननादि गुणोंका अभाव है अत एव नामादि अर्हन्तोंका यहां ग्रहण नहीं किया है.

सिद्धोंके भी नामसिद्ध, स्थापनासिद्ध वगैरे भेद हैं. जिसको सिद्धस्वरूप प्राप्त नहीं हुवा है ऐसे मनुष्यको नामसिद्ध कहते हैं. उसका सिद्ध यह नाम गुणादिनिमित्तोंके विना केवल व्यवहारार्थ रक्खा गया है.

सिद्धोंके प्रतिबिंबोंको स्थापनासिद्ध कहते हैं.

यहां शंका—शरीसहित आत्माका प्रतिबिंब अर्थात् प्रतिमा मानना योग्य है. परंतु जिनके शरीरका अभाव है, जो शुद्धात्मस्वरूपको प्राप्त हो गये हैं ऐसे सिद्धोंकी प्रतिमा मानना अर्थात् प्रतिमामें सिद्धोंका आरोप करना यह कैसा न्यायसंगत है ?

उत्तर—पूर्वभावप्रज्ञापननयकी अपेक्षासे सिद्धोंको प्रतिमामें स्थापन कर सकते हैं. अर्थात् जो वर्तमान कालमें सिद्ध हैं वेही पूर्वकालमें शरीरसहित सयोगकेवली थे अतः उनकी अपेक्षासे सिद्धोंमें भेद न मानकर प्रतिमामें सिद्धोंकी स्थापना हो सकती है. सयोगकेवली अथवा इतर आत्मा शरीरसे विभिन्न नहीं होता है. यदि सयोग केवलीको देहसे विभिन्न मानोगे तो सयोगकेवलीको संसारिता नहीं हैं ऐसा मानना पडेगा. अशरीर माननेसे संसारी व अशरीरता यह परस्पर विरुद्ध है. अतः शरीरकी आकृतीके समान चिदात्मा भी आकृतिमान् समझना चाहिये. जैसी शरीरकी आकृति रहती है उसी तरह चिदात्मा सिद्धकी भी आकृति रहती है. इस लिये शरीरके समान चिदात्मा सिद्ध भी संस्थानवान्-आकृतिवान है. शरीरस्थ आत्मा जैसा अपने संस्थानसे आकृतिसे अभिन्न है वैसा मुक्तात्मा भी अपने संस्थानसे अभिन्न है. अतः प्रतिमामें सम्यक्त्वादि अष्ट गुणोंसे विराजमान वही सिद्ध ये है ऐसा संकल्प कर सकते हैं. अतः सिद्धोंमें स्थापनाका संभव होता है.

आगमद्रव्यसिद्ध—सिद्धप्राभृतके ज्ञाता परंतु संप्रति अनुपयुक्त ऐसे विद्वानको आगमद्रव्यसिद्ध कहते हैं. सिद्धप्राभृतके ज्ञाताका जो शरीर वह ज्ञायकशरीर है. जिसको भविष्यत्कालमें सिद्धावस्था प्राप्त होनेवाली है ऐसा आत्मा भाविसिद्ध है.

व्यतिरिक्त सिद्धकी संभावना नहीं है. क्योंकि जैसे तीर्थकरनामकर्मसे अर्हत्पर्याय प्राप्त होता है वैसे सिद्धपर्याय किसी कर्मके उदयसे होता नहीं है. वह संपूर्ण कर्मके नाशसे होता है. इसलिये व्यतिरिक्तसिद्ध यह भेद नहीं है. कोइ पुद्गलद्रव्य भी सिद्धत्वपर्यायका उत्पादक है नहीं इसलिये नोकर्मसिद्ध यह भी भेद नहीं है.

सिद्धप्राभृतके अनुसार सिद्धोंका स्वरूप जाननेवाले ज्ञानसे परिणत आत्माको आगमभावसिद्ध कहते हैं.

संपूर्ण द्रव्यकर्म और भावकर्ममल जिनका नष्ट हो चुका है. अनंतज्ञानादि सर्व क्षायिकभाव जिनको

प्राप्त हो गये हैं. उनको नो आगमभाव सिद्ध कहते हैं. इसी सिद्धका प्रकृतविषयमें ग्रहण किया है. इतर सिद्धोंका ग्रहण नहीं किया है क्योंकि इतर सिद्धोंमें संपूर्णतया आत्मस्वरूपकी प्राप्ति नहीं हुई है.

३ चेदिय– चैत्य अर्थात् प्रतिमा चैत्य शब्दसे प्रस्तुत प्रसंगमें अर्हत् और सिद्धोंके प्रतिमाओंका ग्रहण समझना चाहिये. अथवा यह मध्यप्रक्षेप है. इसलिये पूर्वविषय और उत्तर विषयक स्थापनाका यहां ग्रहण होता है. अर्थात् पूर्वविषय तो अरहंत और सिद्ध है ही. उत्तर विषय श्रुत, शास्त्र, धर्म, साधुपरमेष्टी, आचार्य, साधु वगैरह हैं. इनका भी यहां संग्रह होता है. इनकी भी स्थापनाप्रतिमा होती है.

४ श्रुतज्ञान—श्रुतज्ञानावरण कर्मका क्षयोपशम होनेसे वस्तुके यथार्थ स्वरूपका ग्रहण करनेवाला सम्यग्दर्शन सहित जो ज्ञान वह श्रुतज्ञान है. इस ज्ञानके आचारांगादि वारा अंग, उत्पाद पूर्वादि चौदा पूर्व, और सामायिकादि चोवीस प्रकीर्णक अर्थात् अंगबाह्य ऐसे इसके भेद हैं इसकी रचना तीर्थकर, श्रुतकेवली, गणधर और आरातीय आचार्य इन्होंने की है.

५ धर्म–सम्यग्दर्शन और सम्यग्ज्ञानका अनुसरण करने वाला सम्यक् चारित्र यहां धर्म शब्दका अर्थ है. इस धर्मके सामायिक छेदोपस्थापना, परिहारविशुद्धि, सूक्ष्मसांपराय, और यथाख्यात ऐसे पांच भेद हैं. दुर्गतिको जानेवाले जीवको जो धारण करता है अर्थात् उसका उद्धार करता है और शुभ इंद्रादिपदवीपर जो स्थापन करता है वह धर्म है ऐसी धर्मशब्दकी व्याख्या है. अथवा—

क्षमा, मार्दव, आर्जव, शौच, तप, संयम, आर्किचन्य, ब्रह्मचर्य, सत्य और त्याग ऐसे दश धर्म अन्य ग्रंथमें कहे हैं उनका भी यहां धर्म शब्दसे संग्रह करना चाहिये.

१ क्षमा—क्रोधके निमित्त–कटुवचन, निंदा वगैरे उपस्थित होनेपर भी मनमें कलुषता उत्पन्न न होने देना. किसीके साथ अपनी मित्रता होती है तब क्रोधके कारण उपस्थित होनेपर भी मन कलुषित न होने देना यह कुछ क्षमा नहीं समझी जाती है. अथवा अपना कार्य सिद्ध होने तक मनुष्य क्रोधका कारण उपस्थित होनेपर भी शांति धारण करता है यह भी सच्ची क्षमा नहीं है. परंतु स्नेहादिकी अपेक्षाविना जो शांतिभाव मनमें धारण करना वही क्षमा है.

२ मार्दव—जाति, कुल, तप इत्यादिका अभिमान न होना वह मार्दव है. मैं अभिमान करूंगा तो लोक

मेरेऊपर रुष्ट होंगे अथवा मेरे ऐहिक कार्योमें बाधा उपस्थित होगी ऐसी भीतीसे मान न करना यह सच्चा मार्दव नहीं है. किंतु मान करनेसे आत्मा पतित होता है. मानसे नीचगतिमें भ्रमण करना पडेगा ऐसी भावना हृदयमें धारण कर मार्दवधर्मका पालन करना चाहिये.

३ आर्जव—दोरीके दो छोर पकडकर खीचनेसे वह सरल होती है उसी तरह मनमेंसे कपट दूर करनेपर वह सरल होता है अर्थात् मनकी सरलताको आर्जव कहते हैं.

४ लाघव—धनादि वस्तुओंमें ये मेरे हैं ऐसी अभिलापबुद्धिही सर्व संकटोंमें मनुष्यको गिराती है इस ममत्वको हृदयसे दूर करनाही लाघव अर्थात् शौच धर्म है.

५ तप—अन्न, पान, लेह्य इनका त्याग करना, रसोंका त्याग करना, दाता पात्र इत्यादिकोंका नियम करना यह सब तप है. इस लोकमें अपनी कीर्ति हो, अपनेको लोक पूजे इत्यादि अभिलापा छोडकर बारह प्रकारका तप करना चाहिये.

६ संयम—इंद्रियोंके स्पर्शादि इष्ट व अनिष्ट विपयोंसे अपने मनको हटाना. इष्ट वस्तुमें रागभाव रखना. अनिष्ट वस्तुसे द्वेप करना यह इंद्रिय असंयम है. इनसे निवृत्त होना यह इंद्रियसंयम है. पंच स्थावर और त्रसजीव इनको बाधा देनेसे विरक्त होना यह प्राणिसंयम है.

७ संपूर्ण परिग्रहोंका त्याग करना यह आकिंचन्य धर्म है.

८ नउ प्रकारके ब्रह्मचर्यका पालन करना यह ब्रह्मचर्य है.

९ मुनि और उनके भक्त अर्थात् श्रावक इनके साथ आत्महितकर भापण बोलनायह सत्य धर्म है.

१० मुनिओंके लिये योग्य ऐसे आहार, अभय—वसतिका और शास्त्र ये चीजें देना यह त्याग धर्म है. ऐसे धर्मके दश भेद कहे.

जो रत्नत्रयको साधते हैं ऐसे मुनिराजको साधु कहते हैं.

१ वस्तुके यथार्थ स्वरूप जाननेवाले ज्ञानमें परिणति होना यह ज्ञानाचार है.

२ तत्त्वश्रद्धानमें परिणति होना यह दर्शनाचार है.

३ हिंसादि पांच पापक्रियाओंसे विरक्त होना चारित्राचार है.

४ अनशनादि क्रियाओंमे प्रवृत्ति रहना तप आचार है.

५ अपनी शक्तीके अनुसार ज्ञान दर्शन चारित्रादिकमें प्रवृत्ति करना वीर्याचार है.

ऊपर कहे गये पांच आचारोंमें जो स्वयं उद्युक्त होते हैं और शिष्योंको उद्युक्त करते हैं वे मुनि आचार्य कहलाते हैं.

जो रत्नत्रयमें प्रवृत्ति करते हैं और जिनेन्द्र भगवानका कहा हुवा अर्थ शिष्योंकी अविरुद्धतासे कहते हैं वे उपाध्याय परमेष्टि हैं. ' उपेत्य विनयेन ढौकित्वा अधीयते श्रुतमस्मादिति उपाध्यायः " अर्थात् विनयसे आकर जिनसे शिष्यमुनि आगमार्थका पठन करते हैं ऐसे मुनिराजको उपाध्याय परमेष्टि कहते हैं.

प्रवचन—शंका—श्रुत शब्द प्रवचनवाची है उसका खुलासा किया गया है. प्रवचनका अर्थ श्रुत होता पुनरपि यहां श्रुतका ग्रहण करनेसे पुनरुक्तता दोष आया. उत्तर--प्रवचन शब्दका अर्थ यहां रत्नत्रय हैं. ' णाण दंसणचरित्तमेगं पवयणं ' ऐसे आगम वाक्यसे रत्नत्रयको प्रवचन कहते हैं यह सिद्ध होता है. अथवा श्रुतज्ञानको श्रुत कहना चाहिये ऐसा पूर्वमें कहा है. यहां ' प्रोच्यंते जीवादयो येनेति ' जिनके द्वारा जीवादि पदार्थोंका विवेचन किया जाता है वह प्रवचन है अर्थात् शब्दात्मक श्रुतको यहां प्रवचन कहते हैं.

अरहंत, सिद्ध, इनके और आचार्यादिकोंके प्रतिबिंब, श्रुतज्ञान, धर्म, साधुवर्ग, आचार्य, उपाध्याय, शब्द श्रुत और सम्यग्दर्शन इनमें भक्ति, पूजा प्रशंसा वगैरे करना यह संक्षेपसे दर्शन विनय है. ऐसा इस गाथाका अभिप्राय है. ॥ ४६ ॥

---

भत्ती पूया वण्णजणणं च णासणमवण्णवादस्स ॥
आसादणपरिहारो दंसणविणओ समासेण ॥ ४७ ॥

भक्तिः पूजायशोवादौ दोषावज्ञा तिरस्क्रिया ॥
समासेनैष निर्दिष्टो विनयो दर्शनाश्रयः ॥ ५० ॥

विजयोदया—का भत्ती पूजा ? अर्हदादिगुणानुरागो भक्ति. । पूजा द्विप्रकारा द्रव्यपूजा भावपूजा चेति । गन्धपुष्पधूपाक्षतादिदान अर्हदाद्युद्दिश्य द्रव्यपूजा । अभ्युत्थानप्रदक्षिणीकरणप्रणमनादिका कायक्रिया च । वाचा गुणसस्तवनं च भावपूजा मनसा तद्गुणानुसरणं ।

वण्णजणणं वर्णशब्द. कचिद्रूपवाची शुक्लवर्णमानय शुक्लरूपमिति । अक्षरवाची कचिद्यथा सिद्धो वर्णसमाम्नाय इति । कचित् ब्राह्मणादौ यथात्रैव वर्णानामधिकार इति । कचिद्यशसि वर्णार्थी ददाति । तथा इहाप्यनतरार्थो गृहीत । तेन अर्हदादीना यशोजननं विदुषा परिषदि । अन्येषामविश्ववेदिनां दृष्टेष्टविरुद्धवचनताप्रदर्शनेन निवेद्य तत्संवादिवचनतया महत्ताप्रख्यापनं भगवतां वर्णजननम् ।

चैतन्यमात्रसमवस्थानरूपे निर्वाणे नापूर्वातिशयप्राप्तिरस्ति । यत्नमतरेण सर्वात्मसु चैतन्यस्य सदा स्थिते. । विशेपरूपरहितत्वादसच्चैतन्यं खपुष्पवत् । प्रकृतेरचेतनाया मुक्तिरनुपयोगिनी । किं तया बद्धया मुक्तया वा फलमात्मन ? अनया दिशा कापिलमते सिद्धता दुरुपपादा ॥ बुद्ध्यादिविशेषगुणरहितता सिद्धताऽन्येषां । आत्मनोऽचेतनता क. सचेतनोऽभिलपति । विशेपरूपशून्य वा कथमात्मन सत्ता ? नैव चासावात्मा पराभ्युपगत. बुद्ध्यादिगुणरहितत्वाद्भस्मवत् । रागादिक्लेशवासनारहितं चित्तमेव मुक्तिशब्देनोच्यते इत्यत्र चित्तमत्यंतासाधारणरूपं । यद्येक चिद्रूपं नेतरदिति तस्य स्वभावोऽनिरूप्य । असाधारणस्वरूपशून्यं यत्तदसद्यथा—नभस्तामरसं । असाधारणरूपशून्यं च विवक्षिताच्चित्तादन्यदिति । एवं मतान्तरे निरूपितानां सिद्धानामघटमानत्वाद्बाधाकारिसकलकर्मलेपनिर्दहनसमुपजाताचलस्वास्थ्यसमवस्थिता. । अनंतज्ञानात्मकेन सुखेन संतृप्ता सिद्धा इति तन्माहात्म्यकथनं सिद्धानां वर्णजननं ।

यथा वीतरागद्वेषास्त्रिलोकचूलामणयोऽर्हदादयो भव्यानां शुभोपयोगकारणतामुपयान्ति । तद्वदेतान्यपि तदीयानि प्रतिविंबानि । बाह्यद्रव्यालवनो हि शुभोऽशुभो वा परिणामो जायते । यथात्मनि मनोज्ञामनोज्ञविषयसान्निध्याद्रागद्वेषौ स्वपुत्रसदृशदर्शनं पुत्रस्मृतेरालंबनं । एवमर्हदादिगुणानुस्मरणनिबंधनं प्रतिबिंबं । तथानुस्मरणं अभिनवाशुभप्रकृते. संवरणे, प्रत्यग्रशुभकर्मादाने, गृहीतशुभप्रकृत्यनुभवस्फारीकरणे, पूर्वोपात्ताशुभप्रकृतिपटलरसापन्हासे च क्षममिति सकलाभिमतपुरुषार्थसिद्धिहेतुतया उपासनीयानीति चैत्यमहत्ताप्रकाशनं चैत्यवर्णजननमिति ।

केवलज्ञानवदशेषजीवादिद्रव्ययाथात्म्यप्रकाशनपटु, कर्मधर्मनिर्मूलनोद्यतशुभध्यानचंदनमलयायमानं । स्वपरसमुद्धरणनिरताविनेयजनताचित्तप्रार्थनीयं, प्रतिबद्धाशुभास्रवं, अप्रमत्तताया. संपादकं । सकलविकलप्रत्यक्षज्ञानबीजं, दर्शनचरणयोः समीचीनयोः प्रवर्तकं इति निरूपणा श्रुतवर्णजननम् ।

दु:खात्त्रातुं, सुखं दातु, निधीनां चाधिपत्ये स्थापयितुं, स्वचक्रविक्रमानमितसकलभूपालखेचरगणबद्धमकुटचकाश्चकलाछनान्पादयो पातयितुं, सुरविलासिनीचेत. समोहावह, तदीयविलुठत्पाठीनलोचनरागमभिवर्धयंतीं, हर्षभरपरवशोद्भिन्नसांद्ररोमाचकंचुकमाचरितुं, उद्यतां रूपशोभामंदिरा सपादयितु, अतिशयिताणिमादिगुणप्रसाधनां, सामानिकादिसुरसहस्रानुयानोपनीतमहत्तां, सततप्रत्यग्रयुवतालिंगिता सुभगतालतारोहयष्टिम्, अनेकसमुद्रविंदुगणनागणितायु स्थितिं, मेरुकुरुसुरसारित्कुलाचलादिगोचरस्वेच्छाविहारचतुरा, सुरांगनापृथुलनितंबबिंबाधरकठिननिविडसमुन्नतकुचतटक्रीडालोकनस्पर्शनादिक्रियोपयोगामितप्रीतिविस्मितां, शतमखतामखेदेन झटिति घटयितुं, विरूपताजननीजराडाकिनीनामगोचरा शोकवृक्षानुल्लंघितां, विपदायानलशिखाभिरनुपप्लुता, रोगोरगैरदष्टवपुषं, यममहिषखु

राखडिता, भीतिवराहसमितिभिरनुल्लिखिता, सक्लेशशतशरभैरनध्यासिता, प्रियवियोगचडपुडरीकैरसेविता, अनर्घ्यसुखरत्नप्रभवभूमिं निर्वृतिं प्रापयितु समर्थो जिनप्रणीतो धर्म इति धर्मस्वरूपकथन धर्मवर्णनजननम् ॥

उत्रोटितप्रियवचनमुखरदुर्भेदबधुसमितिशृखला, दुस्तरतरससारावर्तचिरपरिभ्रमणचकितसवेपथुहृदया', अनित्यभावनावहितचेतस्तया निरस्तशरीरद्रविणादिगोचरा, दु खसहतिसपातरक्षाक्षमस्यापरस्य जिनप्रणीता द्धर्मादभावात् तमेव शरणमित्युपगताः । ज्ञानरत्नप्रदीपप्रभाप्रकरनिर्मूलितभुवनभवनान्तर्लीनाज्ञानध्वान्तसततय, कर्मणामादाने, तत्फलानुभवने, तन्निर्मूलने च वयमेकका एवेति कृतविनिश्चितय, असाधारणचैतन्यादिलक्षणोपनीतभेदापेक्षयाऽन्ये वयमितरद्रव्यकलापादित्यन्यताभावनायामासक्ता, सुखदु खयोरकृतादरद्वेषा., सद्सद्वेद्योदयकर्मनिमित्तत्वेन ममाहृतिमनभिमतं चापेक्षते इति उपकारापकारयोरहमेव प्रणेता, आत्मन शुभाशुभकर्मारोपणे ममैव स्वातत्र्यात्तदुपचरितत्वात् । अनुग्रहनिग्रहयो· परे वराका· किं कुर्वन्तीति मत्वा स्वजनपरजनविवेकनिरुत्सुका, समंतादुपसर्ग महोरगैरवार्यवीर्यैरवष्टब्धा अप्यविचलवृत्तय, क्षुत्पिपासादिपरीषहमहारातिसरभससपातेऽप्यदीनासक्लिष्टचेतोवृत्तय', त्रिगुप्तिगुप्तिमुपाश्रिता, अनशनादितपोराज्यपालनोद्युक्तमतय, धृतानूनव्रतकवचा, गृहीतशीलखेटा., उद्दीर्णध्यानातिनिशितमंडलाग्रा., कर्मारिपृतनासाधनोद्यता साधव इति साधुमाहात्म्यप्रकाशन साधुवर्गवर्णजनन ।

मुक्ताहारपयोधरनिशाकरवासराधीश्वरकल्पमहीरुहादय इव प्रत्युपकारानपेक्षानुग्रहव्यापृता., निर्वाणपुरपरिप्रापणक्षमे मार्गे निर्मले स्थिता., परानपि विनतान्विनेयान्प्रवर्तयन्त., आयतातिधवलज्ञानपृथुलदर्शनपक्ष्मलेक्षणा, कुलीना, विनता, विमया, विमाना, विरागा, विशल्या, विमोहा, वचसि तपसि महसि वाऽद्वितीया इव भूषण सूरय इति सूरिवर्ण जननम् ।

अधिगतश्रुतार्थयाथातथ्यवाच्यवाचकानुरूपव्याख्याना, निरस्तनिद्रातंद्रीप्रमादा',सुचरिता, सुशीला, सुमेधस, इत्याध्यापकवर्णजननं ।

रत्नत्रयालाभादनंतकाल अयमनादिनिधनोऽपि भव्यजीवराशिर्निर्वाणपुरमुपैति तल्लाभे च सकला· सपद· सुलभा· इति मार्गवर्णजनन ।

मिथ्यात्वपटलविपाटनपटीयसी, ज्ञाननैर्मल्यकारिणी, अशुभगतिगमनप्रतिबंधविधायिनी, मिथ्यादर्शनविरोधिनीति निगदनं समीचीनदृष्टेर्वर्णजननम् ।

सर्वज्ञतावीतरागते नार्हति विद्येते रागादिभिरविद्यया च अनुगताः समस्ता एव प्राणभृत' इत्यादिरर्हतामवर्णवाद· ।

स्त्रीवस्त्रगधमाल्यालंकारादिविरहिताना सिद्धाना सुखं न किंचिदतीन्द्रियाणां । तेषा समधिगतौ न निबंधनमस्ति किंचिदिति सिद्धावर्णवाद' ।

स्वकल्पनाभिरयमर्हन्नेष सिद्ध· इत्यचेतनस्य व्यवस्थापनायामपि दारिकाणा कृत्रिमपुत्रकव्यवहृतिरिव न मुख्यवस्तूपसेवनोद्भवं फलं लभ्यते । न प्रतिबिंबादिस्था अर्हदादय· तद्गुणवैकल्यान्न प्रतिबिंबानामर्हदादित्वमिति

चैत्यावर्णवाद. ।

पुरुषकृतत्वाद्दशदाडिमादिवाक्यवदयथार्थता नातींद्रियं वस्तु पुंसो ज्ञानगोचरं, अज्ञातं चोपदिशतो वच कथं सत्यं? तदुद्भूतं च ज्ञानं कथं समीचीनमितिश्रुतावर्णवादः ।

दुर्गतिप्रतिबंधं स्वर्गादिकं च फल विधत्ते धर्म इति कथमदृष्टं श्रद्धीयते ? न हि सन्निहितकारणस्य कार्यस्यानुद्भवोऽस्ति यथाकुरस्य । सुखप्रदायी चेद्धर्मः स्वनिष्पत्त्यनंतर सुखमात्मनः किं न करोति इति धर्मावर्णवाद. ।

अहिंसादिव्रतपालनोद्यता. साधवः,सूरयोऽध्यापकाश्चेष्यन्ते । अहिंसाव्रतमेवैषां न युज्यते पड्जीवनिकायाकुले लोके वर्तमानाः कथमहिंसकाः स्युः? केशोलुंचनादिभिः पीडयता च कथं नात्मवधः? अदृष्टमात्मनो विषय, धर्मं, पापं, तत्फलं च गदतां कथं सत्यव्रतम्? इति साध्ववर्णवादः । एवमितरयोरपि ।

विरुद्धानां एकत्र धर्माणामसंभवात् विरुद्धाभिमतधर्माधिकरणैकवस्तुज्ञापनं न सम्यक् । तदभिरुचेर्न समीचीनता विपर्ययज्ञानानुगतत्वान्मृगतृष्णोदकश्रद्धेव, मिथ्याज्ञानानुगतत्वाच्चरणमपि न सम्यक्। उरगप्रत्ययबलाद्रज्जुपरिहार इवेति प्रवचनावर्णवाद ।

एतेषामवर्णवादानामसंभवप्रदर्शनं। पुरुषत्वाद्रथ्यापुरुषवत् सर्वज्ञो वीतरागो वा न भवत्यर्हन् इति साधनमनुपपन्नं । असर्वज्ञतामवीतरागतां चान्तरेण पुरुषता नोपपद्यते इत्यन्यथानुपपत्तेरभावात्। जैमिन्यादयो न सकलवेदार्थज्ञा पुरुषत्वादविपालवत् इति शक्यं वक्तुम् । सर्वज्ञतावीतरागतासिद्धिश्चान्यत्र निरूपितेति नेह प्रतन्यते । दु.खप्रतीकारार्थेषु वस्तुषु मूढानां सुखसाधनव्यवहार. । शरीरायासमात्रत्वान्न कामिनीसमागमसुखं । वैरूप्यनाशनैर्वस्त्रादिभिर्न कृत्यं सिद्धाना । अशरीराणां सकलदु खापायरूप सुखं अविकलमनंतज्ञानात्मक तेष्ववस्थितं । श्रुत निबधनं तदधिगमे । शुभोपयोगनिमित्तताऽर्हदादीनामिव प्रतिबिंबानामिति न बुद्धयोत्प्रेक्षिता ॥

मूलारा— भत्ती–भावविशुद्धियुक्तोऽनुरागः। पूया पूजा सा च द्वेधा द्रव्यभावभेदात्। तत्र द्रव्यपूजा अर्हदादीनुद्दिश्य गंधाक्षतादिदानं । भावपूजा कायेन अभ्युत्थानप्रदाक्षिणीकरणप्रणामादिका । वाचा गुणस्तवन । मनसा गुणानुस्मरणं ॥

वण्णजणणं–विदुषा परिषदि यशोजननं गुणकीर्तनमिनि यावत् । तत्र सुगतादीना दृष्टेष्टविरुद्धवचनताप्रकाशेननासर्वज्ञत्वं प्रज्ञाप्य तत्संवादिवचनतया महत्त्वप्रख्यापनमर्हता वर्णजननं ।

एवं परमतप्रसिद्धान् सिद्धानपोह्य जिनमतेन तत्स्वरूपनिरूपणं सिद्धाना वर्णजननं । तथा हि–न तावत्साख्योक्ता सिद्धता घटते । चैतन्यमात्रावस्थानरूपे निर्वाणे पुंसोऽपूर्वातिशयप्राप्तेरभावात् न ससारिभ्यः कश्चिद्विशेषस्तद्रूपमुक्ते· सर्वेषामयत्नसिद्धतया सदा सत्वात् । चैतन्यमात्रस्य ज्ञेयाकारपरिच्छेदे पराङमुखस्य विशेषरूपरहितत्वादसत्त्वं खपुष्पवत् । न च प्रकृतेर्बद्धत्ववन्मुक्तरपि किंचित्फलमात्मन· । नापि वैशेषिकोक्ताना

ज्ञानादिगुणाना अत्यंतोन्मुक्तिर्मुक्तिर्युक्ता । न खलु कश्चित् स्वगुणस्य सतो विनाशाय सचेता· प्रयतते, किं तर्ह्यतिशयाधानाय । किं पुनश्चैतन्यस्य विशेपलक्षणशून्यस्य चात्मनः कथं सत्ता खपुष्पवत्, कथं वात्मतत्वं ? तथाहि-नासौ वैशेपिकाभ्युपगत आत्मा आत्मबुद्ध्यादिगुणरहितत्वादश्मवत्। नापि वौद्धमतो निरास्रवचित्तोत्पत्तिलक्षणो मोक्षः क्षोदं क्षमते। चित्तक्षणो हि रागादिक्लेशवासनारहितो यदि प्राक्तनात्सास्रवचित्तक्षणादुत्पद्येत तर्हि कुतस्तस्य निरास्रवत्त्वं ? निरास्रवात्तस्मात्तस्योत्पत्तो तु तस्यापि कुतो निरावस्रवत्वमित्यनवस्था । न च पूर्वेण सर्वथा नष्टेन परो जन्येत मृतेन पित्रा पुत्रवत् । नापि ब्रह्माद्वैतवादिकल्पितनिर्वाण प्रमाणं । ते हि यथा घटविघटने घटाकाशमाकाशीभवति तथा देहोच्छेदात्सर्वे· प्राणी परे ब्रह्मणि लीयते इति तल्लक्षणमाचक्षते । तदसत् । निस्तरंगैकरूपपरमब्रह्मणः कुतश्चित्प्रमाणादसिद्धत्वात्, भेदस्यैव सकलप्राणिना निरावाधबोधे प्रकाशमानत्वात् । अभेदस्य तन्निरपेक्षस्य स्वप्नेऽप्यप्रतीते· । एवं मतान्तरोक्ताना सिद्धाना अघटमदु.रारिसंसारकाराकरणकर्मनिर्मूलनोन्मीलितानिर्मलनिश्चलविश्वदार्शीचिद्रूपसमवस्थानलक्षणं स्वारूप्यमास्थिताः अनंतज्ञानात्मकेन सुखेन सतृप्ताः सिद्धा इत्यादि तद्गुणकीर्तनं सिद्धवर्णजननं ।

चैत्यवर्णजननं यथा—अर्हदादीना शातरूपत्ववीतरागत्वादिगुणानुस्मरणादपूर्वपापनिरोधोऽभिनवपुण्यास्रवण, पुण्योदयस्फारीभावः, पापोदयापकर्पश्च स्यात् । तच्च तत्प्रतिविंवदर्शनादुत्पद्यते । पुत्रसदृशदर्शनात्तद्गुणस्मरणवत् । वाह्यद्रव्यालंवनो हि शुभोऽशुभो वा परिणामः स्यात् इष्टानिष्टार्थसान्निध्याद्रागद्वेपवत् । अथवा अर्हदादिप्रतिरूपदर्शनात्तद्रूपस्मर्यते, ततश्च तद्गुणाः॥ तथा चोक्तं—भूपावेपायुधत्यागी विद्यादमदयापरं ॥ रूपमेव तवाचष्टे धीरदोपविनिग्रहम् ॥ तदेवमर्हदादिवत्तच्चैत्यान्यपि शुभोपयोगहेतुतया सकलाभिमतपुरुपार्थसिद्धिहेतुत्वादुपासनीयानि इति चैत्यमहत्ताप्रकाशनं तद्वर्णजननं ।

श्रुतज्ञानं हि केवलज्ञानवद्विश्वतत्त्वावभासि, कर्मनिर्मूलनोद्यतशुभध्याननिदान, स्वपरसमुद्धरणानिरतविनेयजनताप्रार्थनीयं, प्रतिवद्धशुभास्रवं, अप्रमत्तताया: संपादकं, सकलविमलप्रत्यक्षज्ञानवीजं, समीचीनदर्शनचरणप्रवर्तकमिति निरूपणं श्रुतवर्णजननं ॥

चतुर्गतिदुःखात्त्रातुं, निरातंकातिशयितदीर्घकालोपलालितं सुखं दातुं, सकलसाम्राज्यं स्वर्गाधिराज्यं चाधिकर्तुं, सुरेंद्रनागेंद्रान्पादयोः पातयितुं, समवसरणादिवहिरंगानंतज्ञानाद्यंतरगंलक्ष्मीलक्षणा जीवन्मुक्तिं, सम्यक्त्वाद्यष्टगुणलक्षणामात्यंतिकीं परममुक्तिं च संपादयितुं समर्थो जिनप्रणीत एव धर्मो नान्य इति धर्ममहिमख्यापनं धर्मवर्णजननम् ॥

न देशातरभ्रमणमात्रादनियतविहारी भवति किंत्वेवंविध इत्याचष्टे—

वसधीसु य उवधीसु य गामे णयरे गणे य साण्णिजणे ॥
सव्वत्थ अपडिबद्धो समासदो अणियदाविहारो ॥ १५३ ॥

श्रावके नगरे ग्रामे वसतावुपधौ गणे ॥
सर्वत्राप्रतिबद्धोऽस्ति योगी देशांतरातिथिः ॥ १५५ ॥

इति अनियतविहारसूत्रम् ।

विजयोदया—वसईसु अ इत्यादिना—वसतिपु उपकरणेपु । ग्रामे नगरे गणे श्रावकजने च । सर्वत्र अप्रतिवद्ध' । ममेदं वसत्यादिकं अहमस्य स्वामीति संकल्परहितः अनियविहारी भवति इति संक्षेपत. प्रतिपत्तव्यः ॥ विहारो गदो ।

न देशांतरभ्रमणमात्रादनियतविहारी किंत्वेवंविधो भवन्नित्याह—

मूलारा—सण्णिजणे श्रावकलोके। अपडिबद्धो ममेदमहस्य स्वामीति संकल्परहितः । अनियतविहारः । सूत्रतः ॥ ६ ॥ अंकतः ॥ १२ ॥

जैनीं दीक्षामास्थितोऽभ्यस्तशास्त्र ।
श्रेयोमार्गे सार्थवाहायते यः ॥
कीर्तिव्यामाशाधरः सोऽगभेदेऽ ।
भ्युद्यत्प्रीतिः सद्व्रतेः शश्वदीष्टे ॥

इत्याशाधरानुस्मृतग्रंथसंदर्भे मूलाराधनादर्पणे पदप्रमेयार्थप्रकाशीकरणप्रवणे ग्रहणशिक्षणप्रतिसेवनाविधिप्रकाशनो नाम द्वितीय आश्वास' ॥ २ ॥

देशांतरमें भ्रमण करनेमात्रसेही साधु अनियत विहारी कहा जाता है ऐसा नहीं किन्तु अन्य प्रकारसे भी वह अनियत विहारी कहा जाता है. उसीका खुलासा करते हैं—

अर्थ—वसतिका, उपकरण, गांव, नगर, स्वसंघ, श्रावकलोक इन सर्वोंमें जो ममत्वरहित है अर्थात् ये

मेरे हैं और मैं इनका स्वामी हूं ऐसा मनमें कभी संकल्प जो साधु नहीं करता है वह भी अनियतविहारी है ऐसा संक्षपसे कहा जाता है.

विहार अधिकारका वर्णन समाप्त हुवा.

---

अनियतवासादनतरं परिणाम प्रतिपादयितुं उत्तरगाथा—

अणुपालिदो य दीहो परियाओ वायणा य मे दिण्णा ॥
णिप्पादिदा य सिस्सा सेयं खलु अप्पणो कादुं ॥ १५४ ॥

पर्यायो रक्षितो दीर्घं वितीर्णा वाचना मया ॥
शिष्या निष्पादिताः श्रेयो विधातुमधुनोचितम् ॥ १५६ ॥

विजयोदया—अणुपालिदो य अनुपालितश्च सूत्रानुसारेण रक्षित. । दीहो दीर्घः चिरकालप्रवृत्ति. । परियाओ पर्याय. ज्ञानदर्शनचारित्रतपोरूप । वायणा वि वाचनापि । मे मया । दिण्णा दत्ता । णिप्पादिदा य सिस्सा निष्पादिताश्च शिष्या । सेयं श्रेय हितं । अप्पणो काउ आत्मन कर्तुं जुत्त इति शेष' । एतदुक्त भवति । ज्ञानदर्शनचारित्रेषु चिरकालं परिणतोऽस्मि । सूत्रानुसारेण परेभ्यश्च निरवद्यग्रथार्थदानं च कृतं । शिष्याश्च व्युत्पन्ना. सवृत्ताः । एव स्वपरोपकारक्रियया गत. कालः । इत' प्रभृत्यात्मन एव हित कर्तुं न्याय्यमिति चेत प्रणिधान इह परिणामशब्देनोच्यते । तथा चोक्तम्—

अप्पहिय कायव्व जइ सक्कइ परहिय च कायव्वं ॥
अप्पहियपरिहियादो अप्पहिद सुट्ठु कादव्व ॥

---

## तृतीय आश्वासः ।

कर्तुं केवलमात्मने हितमपोह्याशेपवाह्यग्रहम् ।
श्रेयःसंततिवर्तिचित्परिणतिर्युक्तस्तपस्यन् श्रुते ॥
सर्वैकत्वधृतिप्रबंधविधुतत्रासान्यसंगोर्भिरुक् ।
कार्यं प्रायहुताशिहेतुगुभयीमभ्येतु सल्लेखनाम् ॥

अथ गाथाष्टकेन परिणामं प्रणेष्यन् तथाभावितश्रामण्यस्य आत्मसंस्कारसल्लेखनोद्यतस्य मुमुक्षोः समीक्षापूर्वकं स्वहितैककरणीयताप्रणिधानमाह—

मूलारा—परियाओ व्यवहाररत्नत्रयरूपः पर्यायः। मे मया। सेओ हिंतं। खलु अप्पणो स्वस्येव परोपकारस्य पूर्वं कृतत्वात्। काउं कर्तुम्। युक्तमिति शेषः।

उक्तं च—अप्पहियं कायव्वं जइ सक्कइ परिहिदं च कायव्वं।
अप्पहियपरहियादो अप्पहिदं सुट्ठु कादव्वं ॥

अनियतवासके अनंतर परिणामका प्रतिपादन करनेके लिये उत्तरगाथा कहते हैं—

अर्थ—मैंने वहुतकालपर्यंत ज्ञान, दर्शन, चारित्र और तपरूप मुनिपर्यायका पालन किया है. मैंने शिष्योंको वाचना भी दी है अर्थात् ग्रंथ और अर्थ दोनोका भी स्वरूप अच्छी तरहसे समझा दिया है. शिष्य पढाये हैं. वहुत शिष्य तयार किये हैं. अब इस समय अपना कल्याण करना योग्य है. अभिप्राय यह है कि, ज्ञान, दर्शन और चारित्रका मैंने चिरकालतक पालन किया है. निर्दोष ग्रंथ और अर्थ समझाकर शिष्य व्युत्पन्न किये हैं. इस रीतीसे स्वपरोपकार करनेमें मैंने दीर्घ काल विताया है. अब यहांसे मैं अपना ही हित करनेके लिये प्रयत्न करूंगा. इसरीतीसे मनकी एकाग्रता करना इसको परिणाम कहते हैं.

अपना हित करना ही श्रेयस्कर है इस विषयमें पूर्वाचार्य ऐसा कहते हैं—

अपना हित करना चाहिये. शक्य हो तो परका भी हित करना कर्तव्य है परंतु आत्महित और परहित इन दोनोंमेंसे कौनसा मुख्यतया करना चाहिये ऐसा प्रश्न उपस्थित होनेपर अवश्य ही उत्तम प्रकारसे आत्महित करना चाहिये.

---

किण्णु अधालंदविधी भत्तपइण्णोंगिणी य परिहारो ॥
पादोवगमणजिणकप्पियं च विहरामि पडिवण्णो ॥ १५५ ॥

किमालंदं परीहारं भक्तत्यागमुतेंगिनीं ॥
पादोपगमनं किं किं जिनकल्पं श्रयाम्यहम् ॥ १५७ ॥

विजयोदया—किं णु अधालंदविधी भत्तपइण्णं । कोसावथालंदविधि उच्यते-परिणाम सामर्थ्यं, गुरुविसर्जनं, प्रमाणं, स्थापना, आचारमार्गणा, अथालदमासकल्पश्च । गृहीतार्था' कृतकरणा, परीषहोपसर्गजये समर्था., अनिगूहित वलवीर्या, आत्मान मनसा तुलयन्ति । किमथालदविधिराराधनीयोऽथवा प्रायोपगमनविधिरिति । परिहारस्यासमर्था अथालदविधिमुपगंतुकामास्त्रय', पंच, सप्त, नव वा ज्ञानदर्शनसपन्नास्तीव्रसंवेगमापन्ना, स्थविरमूलनिवासिन, अवधृतात्मसामर्थ्या विदितायु.स्थितयः स्थविरं विज्ञापयन्ति—भगवन्! किमिच्छामोऽथालंदकसंयमं प्रतिपत्तुमिति । तच्छ्रुत्वा स्थविरोऽधारयति धृत्या शरीरेण च दुर्बलान्परिणामातिशयविरहिताश्च काश्चिदनुजानाति । समग्रगुणास्ते निसृष्टा स्थविरेण प्रशस्तेऽवकाशे स्थिता कृतलोचा., गुरूणामालोचना कृत्वा कृतव्रतारोपणा अचिरोद्गते आदित्ये कल्पस्थितमेक गणस्यालोचनां श्रोतुं शुद्धिं चैव कर्तुं समुद्यतं स्थापयन्ति । स एव प्रमाणं गणस्य । आत्मन सहाया यावन्तो गणान्निर्गतास्तावन्त एव तत्स्थाने स्थापयितव्या गणे ।

आचारो निरूप्यते—अथालंदसंयताना लिंगं औत्सर्गिकं, देहस्योपकारार्थं आहारं वसतिं च गृह्णन्ति, शेषं सकलं त्यजन्ति । तृणपीठकटफलकादिकं उपधिं च न गृह्णन्ति । प्राणिसंयमपरिपालनार्थं जिनप्रतिरूपतासपादनार्थं च गृहीतप्रतिलेखना ग्रामातरगमने विहारभूमिगमने, भिक्षाचर्यायां, निपद्यायां च अप्रतिलेखना एव व्युत्सृष्टशरीरसंस्कारा परीषहान्सहन्ते नो वा धृतिवलहीना. । अस्ति च मनोवलं संयममाचरितुं इति मत्वा त्रयः पंच वा सह प्रवर्तन्ते । रोगेणाभिघातेन वा जाताया वेदनायाः प्रतिक्रियया वर्ज्या यदा तपसातिश्रान्तास्तदा सहायहस्तावलवन कुर्वन्ति । वाचनादिका च न कुर्वन्ति । यामाष्टकेऽप्यनिद्रा एकचित्ता ध्याने यतंते । यदि बलादायाता निद्रा तत्राकृतप्रतिज्ञा । स्वाध्यायकालप्रतीक्षणादिकाश्च क्रियास्तेषा न सन्ति । श्मशानमध्येऽपि तेषा ध्यानमप्रतिषिद्ध आवश्यकेषु च प्रयतंते । उपकरणप्रतिलेखना कालद्वयेऽपि कुर्वन्ति । सस्वामिकेषु देवकुलादिषु तदनुज्ञया वसन्ति । अज्ञायमानस्वामिकेषु यस्येद सोऽनुज्ञां करोतु इत्यभिधाय वसन्ति । सहसातिचारे जाते अशुभपरिणामे वा मिथ्या मे दुष्कृतमिति निवर्तंते । दशविधे समाचारे प्रवर्तन्ते । दानं, ग्रहणं, अनुपालनं, विनय', सहजल्पनं च नास्ति सधेन तेषा । कारणमपेक्ष्य केषाचिदेक एव सल्लाप. कार्य. । यत्र क्षेत्रे सधर्मा तत्क्षेत्र न प्रविशन्ति । मौनावग्रहनिरताः पथानं पृच्छन्ति, शंकितव्यं वा द्रव्यं शय्याधरगृहं वा । एवं तिस्र एव भाषा. । ग्रामाद्बहिरागंतुकागारे कल्पस्थितेनानुज्ञाते वसन्ति । पशुपक्षिप्रभृतिभिर्यत्र ध्याने विघ्नो भवति तत स्थानादपयाति । को भवान्, कुत आयात., क्व प्रस्थित., कियत्कालं अत्र भवतो वसनं, कति यूयमिति पृष्टा. श्रमणोऽहमित्येवं प्रतिवचनमेकं प्रयच्छन्ति, इतरे कृततूष्णींभावा । अपसरातः स्थानादवकाश मे प्रयच्छ, परिपालय गृहं, इत्यादिको वाग्व्यापारो यत्रान्येषा भवति, बहिरपि वसत. यदि भवति, ततोऽपयान्ति । स्वावास-

गृहे प्रज्वलिते न चलन्ति चलन्ति वा । गोचर्यामप्राप्तायां तृतीयपौरुष्यां द्विगव्यूतमध्वानं गच्छन्ति । यदि गमन-
व्याघातो महावातेन वर्षादिना जातः समतीतगमनकाल एव तिष्ठन्ति । व्याघ्रादिका, व्यालमृगाद्या यद्यापतति ततोऽप-
सर्पन्ति न वा । पादे कटकालग्ने, चक्षुषि रजःप्रवेशे वा, अपनयन्ति न वा । दृढधृतिकाः मिथ्यात्वचर्याराधनामात्मवि-
राधनामवस्था दोषान्वा तस्मात्परिहरन्ति न वा । तृतीयपौरुष्या भिक्षार्थमवतरति । कृपणवनीपकपशुपक्षिगणे अपगते
पंचमीं पिंडैषणा कुर्वन्ति मौनं च । एका, द्वे तिस्रश्चतस्र पंच वा गोचर्यो यत्र क्षेत्रे तत्रालंदिकयोगं प्रवर्तयन्ति । यस्मा-
त्पाणिपात्रभोजी मिथ्याराधना न वर्जयति तस्माल्लेपमलेपं वा मुक्त्वा तत्प्रक्षालयन्ति । धर्मोपदेशं कुर्वन्त तत्प्रव्रज्यामि
च्छामि भगवता पादमूले इत्युक्ता अपि न मनसापि वाछन्ति । किं पुनर्वचसा कायेन । इतरे तत्सहाया धर्मोपदेश
कृत्वा सशिखं मुंडित वा गणाधिपतयेऽर्पयन्ति ।

क्षेत्रत सप्ततिशतधर्मक्षेत्रेषु भवति । कालतः सर्वदा । चारित्रतः सामायिकच्छेदोपस्थापनयोः । तीर्थत
सर्वतीर्थकृता तीर्थेषु । जन्मनि त्रिंशद्वर्षजीविताः । श्रामण्येन एकोनविंशतिवर्षाः । श्रुतेन नवदशपूर्वधरा । वेदतः
पुमासो नपुंसकाश्च । लेश्यातः पद्मशुक्ललेश्या । ध्यानेन धर्मध्यानाः । संस्थानतः षड्विधेष्वन्यतरसंस्थाना देशोन-
ससहस्तादि यावत्पचधनुःशतो त्सेधा । कालतो भिन्नमुहूर्ताद्यूनपूर्वकोटिकालस्थितयः । विक्रियाचारणताक्षीराज्ञावि-
त्वाद्यश्च तेषा जायते । विरागतया न सेवन्ते । गच्छविनिर्गतालंदविधिरेष व्याख्यातः ।

गच्छप्रतिबद्धालंदकविधिरुच्यते—गच्छान्निर्गच्छन्तो बहिः सक्रोशयोजने विहरन्ति । सपराक्रमो गणधरो
ददाति क्षेत्राद् बहिर्गत्वार्थपदं । तेष्वपि समर्था आगत्य शिक्षा गृह्णन्ति । एको द्वौ त्रयो वा परिज्ञानधारणागुणसमग्रा
गुरुसकाशमायान्ति । कृतप्रतिप्रश्नकार्या स्वक्षेत्रे भिक्षाग्रहणं कुर्वन्ति । अपराक्रमस्तु गणधरो गच्छे सूत्रार्थपौरुषीं
कृत्वा अग्रोद्यानं गत्वा यत्नेन ददात्यर्थपदं । अथवा स्वोपाश्रय एव गणधरो अन्यापसरण कृत्वा एकस्मै उपदिशति ।
यदि गच्छेत्क्षेत्रान्तरं गण अथालंदिका अपि गुर्वनुज्ञया याति क्षेत्रं । गच्छनिवासिनः क्षेत्रप्रतिलेखनार्थं प्रयतते तदा
तत्र मार्गेण द्वौ अथालंदिकौ यातः । व्याख्यातोऽयमथालंदविधिः ।

परिहार उच्यते—जिनकल्पस्यासमर्थाः परिहारसंयमभरं वोढुं समर्थाः आत्मनो बलं वीर्यमायु प्रत्यवा-
याश्च ज्ञात्वा ततो जिनसकाशं उपगत्य कृतविनयाः प्राञ्जलयः पृच्छन्ति "परिहारसंयमं प्रतिपत्तुमिच्छामो युष्माकमा-
ज्ञया" इति तच्छ्रुत्वा येषां ज्ञानमनुत्तरं उपजायते विघ्नो वा तान्निवारयति । निसृष्टास्तु यतीन्द्रेण संयताना कृतनि शल्या
प्रशस्तमवकाशमुपगता , लोचं कृत्वा सुनिश्चिता गुरूणा कृतालोचना व्रतानि विशुद्धानि कुर्वन्ति । परिहारसंयमा-
भिमुखाना मध्ये एकं सूर्योदये स्थापयन्ति कल्पस्थितं गुरुत्वेन । सच प्रमाणं तस्य गणस्य । स चालोचनां श्रुत्वा शुद्धिं
करोति । कल्पस्थितमाचार्यं मुक्त्वा शेषाणामर्द्धा अग्रे परिहारसंयमं गृह्णन्ति इति परिहारिका भण्यन्ते । शेषास्ते-
षामनुपरिहारिका । पश्चात्संयमग्राहिणः अनुपरिहारिका भण्यंते । एवं कल्पस्थिते सति ये पश्चात्परिहारसंयमार्थमात्मा-
नमुपसृतास्तानपि स्वगणे प्रक्षिपति गणी । यावन्निरूनो गणः तावत्प्रमाणं गणं कृत्वा परिहारिकाननुपरिहारिकांश्च व्य-

वस्थापयति। तेन परिहारसंयम निविशमाना अनुपरिहारिकाश्च एको द्वौ बहवो वा भवन्ति। जदि तिण्णि, गणी विदिओ परिहारसंयमं पडिवण्णो, तदिओ अणुपरिहारगो हवे। जदि पंच एको कप्पट्ठिदो, दो परिहारसंजम पडिवज्जति। तेसिमणुपरिहारगा पत्तेगं। इतरे जदि एगो कप्पट्ठिदो, तिण्णि परिहारगा, इदरे तिण्णि अणुपरिहारगा। जदि णव एगो कप्पट्ठिदो, चत्तारि परिहारगा, चत्तारि अणुपरिहारगा। छहिं मासेहिं परिहारीणिविट्ठा हवति। ततो पच्छा अणुपरिहारी परिहारं पट्ठवेदि। तेसिं णिविट्ठपरिहारी हवतेणुपरिहारगे ते पुण छहिं मासेहिं णिविट्ठाइं भवन्ति। तु कप्पट्ठिदो पच्छा परिहार पडिवज्जदि। तस्सेगो अणुपरिहारी एगो कप्पट्ठिदो वि। असोविअ छहिं मासेहिं णिविट्ठपरिहारगो अट्ठारसमासा ते एव होंति पमाणंदा।

लिंगादिकस्तेपामाचारो निरूप्यते—एकोपधिक अवसानं लिंग परिहारसंयताना। वसतिमाहारं च मुक्त्वा नान्यद् गृह्णन्ति तृणफलकपीठकटकादिक। सयमार्थं प्रतिलेखन गृह्णति। त्यक्तदेहाश्च चतुर्विधानुपसर्गान्सहन्ते। दृढधृतयो निरतर ध्यानावहितचित्ता। अस्ति नो वलवीर्यं सर्वगुणसमग्रता च। एवभूता अपि यदि गणे वसामो वीर्याचारो न प्रवार्तित स्यादिति मत्वा त्रय, पंच, सप्त, नव वैपणा निर्यान्ति। रोगेण वदनयोपद्रुताश्च तत्प्रतिकारं च न कुर्वन्ति। प्रायोग्यमाहारं मुक्त्वा, वाचनां प्रश्न परिवर्तना मुक्त्वा सूत्रार्थपौरुपीष्वपि सूत्रार्थमेवानुप्रेक्षन्ते। एव यामाएकेऽपि निरस्तनिद्रा ध्यायान्ति। स्वाध्यायकालप्रतिलेखनादिकाश्च क्रिया न सन्ति तेपा। यस्माच्छ्मशानमध्येऽपि तेषा न ध्यानं प्रतिपिद्ध। आवश्यकानि यथाकालं कुर्वंति। कालद्वये कृतोपकरणशोधना अनुज्ञाप्य देवकुलादिपु वसन्ति। आनिर्शायमानस्वामिकेपु यस्येदं सोऽनुज्ञान न' करोतु इति विशति। आसीधिका च निपीधिका च निष्क्रमणे प्रवेशे च संपादयाति। निर्देशकं मुक्त्वा इतरे दशविधे समाचारे वर्तते। उपकरणादिदान, ग्रहण, अनुपालनं, विनयो, वदना संल्लापश्च न तेपामस्ति सघेन सह। गृहस्थैरन्यालिंगिभिश्च दीयमानं योग्यं गृह्णन्ति। तैरपि न शेपोऽस्ति संभोग.। तेपा त्रयाणा पंचाना, सप्ताना, नवानां परस्परेणास्ति संभोग'।

कप्पट्ठिदो णुकप्पी भुजणसंघाडदाणगहणे वि॥<br>
संवासवंदणालावणाहि भुंजन्ति अण्णोण्ण॥<br>
संवासवंदणोपाददाण अणुपालणाहि परिहारिं॥<br>
अणुपरिहारी भुजदि निवसमाणो वदणसंवासालावणाहिं॥<br>
कप्पट्ठिद भुंजदि अणुपरिहारिं पि गहणासंवाठाणाहि॥<br>
तु णिव्विसमाणो णिव्विसमाणं संवासदो ण अण्णेण॥

कप्पट्ठिदो भुंजदि सवासणुपासणगिराहिं। कप्पट्ठिदोणुकप्पी वदित्ता वेंति धम्मलाहोत्ति। गारात्थि अण्णातित्थी अण्णातित्थीहिं निदिसंतो पत्तसुणी को सव्वे वि विणय अण्णोण्णं गणं वादति दट्ठूण व सोदूण व जत्थ हु साधम्मिगो वसदि खेत्तो तं ण पससति। खेत्तं कुदो हु णो वदणादीगं॥ एवं कल्पोक्त. क्रमः सर्वोनुगंतव्य।

मौनाभिग्रहरतास्तिस्रो भाषा. मुक्त्वा प्रग्रव्याहृतिंमनुज्ञाकरणीं प्रश्ने. च प्रवृत्ता च मार्गस्य शंकितस्य वा योग्यायोग्यत्वेन शय्याधरगृहस्य, वसतिस्वामिनो वा प्रश्न. । ग्रामाद्बहि श्मशानं, शून्यगृहं, देवकुलं, गुहा वा आगंतुकगृहं, तरुकोटरं वा अनुज्ञापयंत्येकवारं । कस्त्वं, कुतो वागच्छासि, गमिष्यसि वा कं देशं, कियच्चिरमत्र वसतिर्यूयं कतिजना इति प्रश्ने श्रवणोऽहमित्येकमेव प्रतिवचनं प्रयच्छन्ति । इतरत्र तूष्णींभाव । इतोऽवकाशादपसर्पणं कुरु, स्थानमिदं प्रयच्छ, परिपालय गृहमित्येवमादिको वाग्व्यापारो यत्र तत्र न वसन्ति । गोचर्या यद्यपर्याप्ता तृतीययामे गव्यूतिद्वयं यान्ति । वर्षमहावातादिभिर्यदि व्याघातो गमनस्य अतीतगमनकालास्तत्रैव तिष्ठति । व्याघ्रादिव्यालागमने यदि ते भद्रा युगमात्र अपसर्पति । दुष्टाश्चेत्पदमात्रमपि न चलन्ति । नेत्रयोर्धूलिप्रवेशे कंटकादिविद्धे वा स्वयं न निराकुर्वन्ति । परे यदि निराकुर्युस्तूष्णीमवतिष्ठंते । तृतीययाम एव नियोगतो भिक्षार्थं गच्छान्ति । यत्र क्षेत्रे पद्गोचर्या अपुनरुक्ता भवन्ति तत्क्षेत्रमावासप्रयोग्य शेषमयोग्यमिति वर्जयन्ति ।

क्षेत्रं, तीर्थं, कालश्चारित्रं, पर्यायं, श्रुतं, वेद, लेश्या, ध्यानं, संहननं, संस्थानं, आयामो गात्रस्य, आयु, लब्धयः, अतिशयज्ञानोत्पत्तिः, सिद्धिरित्येते नियोगा इहानुगंतव्या. । क्षेत्रतः भरतैरावतयो, प्रथमपाश्चात्ययो. तीर्थे, उत्सर्पिणीअवसर्पिण्याः कालत., छेदोपस्थापनाप्रभवाश्चारित्रत., प्रथमतीर्थंकरकाले देशोनपूर्वकोटीकायकालः । विंशतिवर्षाग्रशतवर्षं काल. पाश्चात्यतीर्थे । जन्मतस्त्रिंशद्वर्षाः पर्यायतः एकोनविंशतिवर्षा. । श्रुतेन दशपूर्विण., वेदेन पुरुषवेदाः, लेश्यातस्तेज पद्मशुक्ललेश्याः, धर्मध्यानपरा ध्यानतः, आद्यत्रिकसंहनना षट्कान्यतरसंस्थानाः । सप्तहस्तादिपंचधनु शतायताः । अष्टादशमासा पूर्वकोटी वा आयुः । चारणताहारसिद्धिः, विक्रियाहारर्द्धिश्च लब्धय. । अवधिमन.पर्ययं केवलं वा योगसमाप्तौ प्राप्नुवन्ति । सिद्ध्यन्ति वा परेया । संक्षेपत. परिहारविधिवर्णना ।

जिनकल्पो निरूप्यते—जितरागद्वेषमोहा, उपसर्गपरिषहारिवेगसहा, जिना इव विहरंति इति जिनकल्पिका एक एवेत्यतिशयो जिनकल्पिकानां । इतरो लिंगादिराचारः प्रायेण व्यावर्णितरूप एव ।

क्षेत्रादिभिर्निरूप्यते—सर्वकर्मक्षेत्रेषु भवन्ति जिनकल्पिका । काल. सर्वदा । सामायिकच्छेदोपस्थापने वा चारित्रत. । सर्वतीर्थेषु तीर्थतः । जन्मना त्रिंशद्वर्षाः । श्रामण्यत एकान्नविंशतिवर्षाः । नवदशपूर्वधारिणः । तेजःपद्मशुक्ललेश्या । धर्मशुक्लध्याना. । प्रथमसंहनना., षट्स्वन्यतरसंस्थाना. । सप्तहस्तादिपंचधनुःशतायामा. । भिन्नमुहूर्तादिन्यूना पूर्वकोटि काल. । विक्रियाहारकचारणताक्षीरास्रावित्वादिकाश्च तपसा लब्धयो जायन्ते । विरागास्तु न सेवन्ते । अवधिमनःपर्ययं केवलं वा प्राप्नुवन्ति केचित् । केवलिनस्ते नियमेन सिध्यन्ति ।

स्वहितैकपरो मुमुक्षुर्वीर्याचारानुरोधेन नानाविधान्परमार्षियोग्यानाचरणविधीन्विमृश्य स्वानुरूपे यत्र मतिं विधत्ते तदुपदेष्टुं गाथाद्वयमाह—

मूलारा—अधालदविधिं, अथालंदविधिमृषीणामुत्कृष्टाचरणं । तद्वत्परिहारं जिनकल्पं च । एषां च स्वरूप-

निर्णयार्थमिदं पूर्वनिबंधानुसारेण किंचिन्निरूप्यते । अथालंदविधिर्द्वेधा, गच्छविनिर्गतगच्छप्रतिबद्धभेदात् । तत्र तावद्गच्छविनिर्गताथालंदविधिरभिधीयते । परिहारसंयममाचरितुमसमर्था अथालंदविधिमुपगतुकामास्त्रयः, पंच सप्त, नव, वा ज्ञानदर्शनसंपन्नास्तीव्रसंवेगमापन्ना, धर्माचार्यपादमूलनिवासिनोऽवधृतात्मसामर्थ्या, विदितायुःस्थितयो, धर्माचार्यं विज्ञापयन्ति । भगवन्निच्छामोऽथालंदकसंयमं प्रतिपत्तुमिति । तच्छ्रुत्वा सूरिः समग्रगुणाननुजानाति । ततस्ते शुभे देशे स्थित्वा कृतलोंचा गुरूणामालोचनां कृत्वा कृतव्रतारोपणा अचिरोद्गते सूर्ये कल्पस्थितमेकं गणस्यालोचना श्रोतुं, व्रतविशुद्धिं च विधातुमुद्यतं स्थापयन्ति स एव प्रमाणं गणस्य । आत्मना सह यावन्तो गणान्निर्गतास्तावन्त एव तत्स्थाने स्थापयितव्या गणे । तदाचारो निरूप्यते । अथालंदसंयताना लिंगमौत्सर्गिकमेव । कायस्थित्यर्थमाहारं वसतिं कमंडलुं प्रतिलेखनं च ते गृह्णंति । शेषं परिग्रहं त्यजंति । धृतिकायबलिनश्चेत्परीषहादीन्सहन्ते । अन्यथा चेत्ततः पूर्वमेवापसरंति। रोगेणाभिघातेन वा जनिता वेदनां न प्रतिकुर्वंति । यदा तपसातिश्रान्तास्तदा सहायहस्तावलंबनं कुर्वंति । अहोरात्रे न स्वपन्ति । यद्यधिका निद्रा तदा रात्रौ स्वपंति च । स्वाध्यायकाले प्रतिलेखनादिक्रियास्तेषा न सन्ति । श्मशानमध्येऽपि तेषा ध्यानमप्रतिषिद्धमेव । आवश्यकेषु ते प्रयतन्ते । उपकरणप्रतिलेखनं कालद्वयेऽपि कुर्वंति । सस्वामिकेषु देवकुलादिषु तत्स्वाम्यनुज्ञया वसंति । अनिज्ञातस्वामिकेषु यस्येदं सोऽनुज्ञा करोत्वित्यभिधाय वसंति । सहसातिचारे जातेऽशुभपरिणामे वा मिथ्या मे दुष्कृतमिति निवर्तते ।

इच्छामिच्छाकारी य तधाकारो य आसियाणिसिही ॥
आपुच्छा पडिपुच्छा छंदणसणिमंतणा य उवसंपा ॥

इत्येवं दशविधे समाचारे प्रवर्तते । संघेन सह तेषां दानं, ग्रहणं, अनुपालनं, विनयः, सहभोजनं च नास्ति । कारणमपेक्ष्य केषाचिदेक एव संलापः कार्यः । यत्र सधर्मा तत्क्षेत्रं न प्रविशन्ति । मौनाभिग्रहनिरता अपि पंथानं, शंकितव्यद्रव्यं, शय्याधरगृहं वा पृच्छन्ति । ग्रामाद्बहिरागन्तुकागारे कल्पस्थितेनानुज्ञाते वसंति । पशुपक्षिप्रमुखैर्यत्र ध्यानाविघातस्ततोऽपयान्ति । को भवान् कुत आयात, कुत्र प्रस्थितः, कियन्त कालं अत्र भवता स्थेयं, कति यूयमिति पृष्टा श्रमणोऽहमित्येव प्रतिवचनमेकमेव प्रयच्छंति । अपसरातः स्थानादवकाशं मे प्रयच्छ, परिपालय गृहमित्यादिको जनजल्पो यत्र तत्र न वसंति । बहिरपि वसता, यदि भवति ततोऽपयान्ति । स्वावासगृहे प्रज्वलिते न चलन्ति । चलन्ति

वा । यदि कंटकादिकं लग्नं, चक्षुषि वा धूल्यादिकं प्रविष्टं स्फेटयन्ति न स्फेटयन्ति वा । व्याघ्रादिका, व्यालमृगाद्या वा यद्यापतन्ति ततोऽपसर्पन्ति न वा । एका द्वे, तिस्रश्चतस्रः पंच वा गोचर्यो यत्र क्षेत्रे तत्राथालदकयोगं प्रवर्तयन्ति । तृतीययामे प्रविष्टगोचर्यो काललाभालाभेऽपि गव्यूतिद्वयं गच्छन्ति । यदि गमनव्याघातो महावातेन वर्षादिना वा जातस्तदा तत्रैव तिष्ठन्ति । यदि कोपि तेषां पार्श्वे दीक्षां याचते तदा मनसापि नेच्छन्ति । इतरे तत्सहाया धर्मोपदेशं कृत्वा सशिखं मुंडितं वान्येषामाचार्याणां तं नीत्वा समर्पयंति । सर्वेषु धर्मक्षेत्रेषु सर्वतीर्थेषु सर्वदा भवन्ति । सामायिकं छेदोपस्थापना वाचरन्ति । जन्मतस्त्रिंशद्वर्षाणि भोगान्भुक्त्वा श्रामण्येनैकोनविंशतिवर्षान्नवदशपूर्विणः पुंवेदा, नपुंसकवेदा वा पद्मशुक्ललेश्या वा धर्मध्यानिनः, षट्संहननेषु संस्थानेषु चैकतरसंहननसंस्थाना देशोनसप्तहस्तादि यावत् पंचशतोत्सेधा अथालंदककालतो जघन्येन भिन्नमुहूर्तायुःस्थितयः, उत्कर्षेण गतवर्षोनपूर्वकोटिस्थितिकाः । क्षीरस्वादादितपोलब्धीरपि सरागमसेवमानाश्च भवन्ति । एवं गच्छविनिर्गताथालंदकविधिर्व्याख्यातः ।

गच्छप्रतिबद्धाथालंदकविधिरुच्यते । गच्छान्निर्गच्छतो बहिः सक्रोशयोजने विहरन्ति । सपराक्रमो गणधरः क्षेत्राद्बहिर्गत्वा तेभ्यो ददात्यर्थपदम् । तेऽपि समर्था आगत्य शिक्षां गृह्णन्ति । एको, द्वौ, त्रयो वा परिज्ञानधारणागुणसमग्रा गुरुसकाशमायान्ति । कृतप्रतिप्रश्नकार्याः स्वक्षेत्रे गत्वा भिक्षां गृह्णन्ति । अपराक्रमस्तु गणधरो गच्छे सूत्रार्थपौरुषीं कृत्वा अग्रोद्यानं गत्वा यत्नेन ददात्यर्थपदं । अथवा स्वोपाश्रय एव गणधरोऽन्यापसारणं कृत्वा एकस्मै उपदिशति । यदि गच्छेत्क्षेत्रांतरं गणस्तदाथालंदिका अपि गुर्वनुज्ञया गच्छन्ति । यदा गच्छनिवासिनः क्षेत्रप्रतिलेखनार्थं प्रयतंते तदा तत्र मार्गेण द्वावथालंदिकौ यात इति ।

परिहार उच्यते । जिनकल्पस्यासमर्थाः परिहारसंयमभारं वोढुं समर्था आत्मनो वीर्यमायुः प्रत्यवायांश्च ज्ञात्वा ततस्तीर्थकरपादमूलमुपगम्य पृच्छन्ति भगवन्परिहारसंयममाचरितुमिच्छामो वयमिति । ततो येषां ज्ञानमनुत्तरमुपजायते विज्ञो वा तेभ्योऽन्ये तीर्थंकरेणानुमता लोचं कृत्वा गुरूणामालोच्य व्रतशुद्धिं कुर्वन्ति । परिहारसंयमाभिमुखानां मध्ये एकमाचार्यं कल्पस्थितं स्थापयन्तीति परिहारका भण्यन्ते । तेषां शेषाः पश्चात्परिहारसंयमं गृह्णन्तीत्यनुपरिहारका उच्यन्ते । यावन्तो गणान्निर्गतास्तावन्तो जना न कर्तव्याः । तेऽपि यत्र पंच सप्त नव वा भवन्ति । यदि पुनः केचित्परिहारसंयमार्थिन आयान्ति तदा तेऽपि गणमध्ये प्रक्षेप्तव्या यावन्नव । यदि त्रयः एको गणी, द्वितीयः परिहारसंयमं प्रतिपन्नः, तृतीयोऽनुपरिहारको भवति । एवं षण्मासैः परिहारसंयत परिहारसंयमे निविष्टो भवति । ततोऽनुपरिहारी

परिहारं गृण्हाति । सोऽपि पण्मासे परिहारे निविष्टो भवति । तत' कल्पस्थित आचार्योऽनुपरिहारकनामा परिहारं प्रविपद्यते । सोऽपि पण्मासे परिहारे निविष्टो भवति । एवमष्टादशमासाः परिहारप्रवेशने त्रयाणा मुनीनां भवंति । एवं पंचाना, सप्ताना, नवानामपि वक्तव्यम् ।

इदानीं परिहारसंयतानामाचार उच्यते । वसतिमाहारं प्रतिलेखनं च गृह्णन्ति । शेपं परिग्रहं च त्यजंति । गृहस्थैरन्यलिंगिभिर्वा दीयमानं योग्यं प्रतिगृह्णन्ति । उत्पन्नचतुर्विधोपसर्गान्सहन्ते । रोगाभिभूता अपि प्रतीकारं न कुर्वन्ति । वाचनादिपु पौरुपीष्वपि सूत्रार्थमेवानुप्रेक्षन्ते। आवश्यकानि यथाकालं कुर्वन्ति। अहोरात्रेऽपि निरस्तनिद्राः । स्वाध्यायकाले प्रतिलेखनादिक्रियास्तेपां न सन्ति । ध्यायन्ति च निरन्तर यतः श्मशानेऽपि ध्यानं न प्रतिपिद्धं । कालद्वयेऽप्युपकरणानि शोधयन्ति । संघेन सह वंदना, भोजनं, संभापणं नास्ति । तेपा परस्परमस्ति । भापात्र-यादन्यत्र मौनव्रतिन' । तृतीययामे गोचर्या प्रविश्य लाभालाभेऽपि गव्यूतिद्वयं गच्छन्ति । वर्पमहावातादिना यदि गमनव्याघातो जायते तदा ते निष्क्रान्तगमनकालास्तत्रैव वसन्ति । व्याघ्रव्यालमृगादयो यदि भद्रास्तदा युगमात्रम-पसरन्ति । अथ दुष्टास्ते पदमपि न लंघन्ते । अक्षिणि धूलिप्रवेशे पादे च कंटकवेधे जाते स्वयं न स्फेटयन्ति । परस्फेटने तु तूष्णीका । क्षेत्रतः सर्वधर्मक्षेत्रेपु भवन्ति । तीर्थतः सर्वतीर्थेपु । कालतः सर्वदा । चारित्रत' सामायिकच्छेदोपस्थाप-निका. । जन्मतस्त्रिंशद्वर्पाणि भोगभोजिनः । तपसैकोनविंशतिवर्पकाः। श्रुतेन नवदशपूर्विणः । वेदेन पुरुपवेदाः । लेश्यातः शुभत्रिलेश्या । ध्यानतो धर्मध्यानिनः संहननतश्चादित्रिकसंहनना' । संस्थानत पडेकतरसंस्थानाः । उत्सेधत सप्तह-स्तादिपंचधनुःशतायताः । परिहारकालतो जघन्येनाष्टादशमासायुष्का । उत्कर्पेण गतवर्पोनाः पूर्वकोट्यायुष्काः । क्षीरस्वा-दादितपोमाहात्म्योत्पन्नर्द्धीर्विरागतया न सेवन्ते । शीतोष्णकुंथ्वादिसंछन्नभूम्या गमनाभावादुत्क्षिप्तैकपादेन पण्मासं ति-ष्ठन्ति । मतिश्रुतावधिज्ञानिनः योगसमाप्तौ केवलं वाप्नुवन्ति । एवं परिहारसंयमविधिर्भणित ॥

जिनकल्पो निरूप्यते जितरागद्वेपमोहा. परिपहोपसर्गारिवेगसहा जिना इव विहरन्ति इति जिनकल्पिता' । ते च एकविहारिण. । पूर्वोक्तपरिहारसंयताचारलक्षणसमग्रा. । अयं तु विशेपो धर्म्यशुक्लध्यानिनस्ते जघन्येनाभि-न्नमुहूर्तायुष्का' अवधिं मन.पर्ययं, केवलं वा प्राप्नुवन्ति ।

अर्थ—अथालंद विधि, भक्तप्रतिज्ञा, इंगिनीमरण, परिहारविशुद्धिचारित्र, पादोपगमनमरण ओर जिनकल्पावस्था इनमेंसे कोनसी अवस्थाका आश्रय कर मैं रत्नत्रयमें विहार करूं ऐसा विचार करके साधुको धारण

करने योग्य अवस्था धारण करके समाधि मरण करना चाहिये. अब आलंदविधिका स्वरूप टीकाकार कहते हैं —

परिणाम, सामर्थ्य गुरुके द्वारा अनुमति मिलना, प्रमाण, स्थापना, आचार मार्गणा और अथालंद मास कल्प इनका वर्णन इस प्रकरणमें आवेगा.

जिनको आगमार्थका स्वरूप ज्ञात हुवा है, अपना मुनिअवस्थाका कर्तव्य जिन्होंनें किया है, परीषह और उपसर्गको जीतनेमें जो समर्थ हैं, अपना बल और वीर्य जिन्होंने व्यक्त किया है, ऐसे मुनि क्या हम आलंद विधि धारण कर सकते हैं या प्रायोपगमनविधि धारण कर सकते हैं ऐसा विचार मनमें करते हैं परिहार विधि धारण करनेमें असमर्थता मालूम करनेपर अथालंदविधीको धारण करते हैं. अथालंदविधीका स्वीकार करनेकी इच्छा रखनेवाले तीन, पांच, सात अथवा नउ मुनि जो कि ज्ञान और दर्शन संपन्न हैं, तीव्र संसारभीरुताको धारण करते हैं, धर्माचार्यके चरण कमलका आश्रय करते हैं, जिनको अपने सामर्थ्यका ज्ञान है, अपनी आयुष्य स्थिति जिनको मालुम हो चुकी है, धर्माचार्यको प्रार्थना करते हैं. हे भगवन् ! हम अथालंदविधीका आश्रय लेना चाहते हैं. धर्माचार्य उनकी विज्ञप्ति सुनकर जो धैर्यहीन, शरीरसामर्थ्यहीन है, जिनके परिणामोमें अतिशयपना नहीं है उनको त्यागकर, धैर्यादिगुणविशिष्ट मुनिओंको अनुज्ञा देते हैं. गुरूसे परवानगी मिलनेपर गुरुके साथ वे प्रशस्त स्थानमें ठहरकर लोच करते हैं. गुरूके सामने दोषोंकी आलोचना करते हैं आलंदविधीके व्रतोंका अपनेमें आरोपण करते हैं. सूर्योदयके अनंतर थोडे समयमेंही कल्पस्थित मुनिओमेंसे एकको जो कि गणकी आलोचना सुननेके लिये और व्रतशुद्धि करनेके लिये उद्यत है, स्थापना करते हैं. वह ही गणके लिये प्रमाणभूत माना जाता है. अपनेको साहाय्य करनेवाले जितने मुनि गणसे निकले हैं उतने मुनि संघमें उनके स्थानमें स्थापन करने चाहिये. अब इन मुनिओंका आचारक्रम कहते हैं—

अथालंद विधिको पालनेवाले मुनि औत्सर्गिक लिंग धारण करते हैं. अर्थात् नग्नही रहते हैं. देहोपकारार्थ आहार, वसतिका, कमंडलु और पिच्छिकाका आश्रय लेते हैं. बाकी सब परिग्रहका त्याग करते हैं. तृण, चटाई, फलक वगैरह उपाधिका त्याग करते हैं. प्राणिसंयमका रक्षण करनेके लिये और जिनरूपताका संपादन करनेके लिये पिच्छिका धारण करते हैं. यदि धैर्य और बलसे रहित न होंगे तो अन्य ग्रामको जाते समय, मठादि भूमीके तरफ गमन करते समय, आहार लेते समय, बैठते समय, प्रति लेखन नहीं करते हैं अर्थात् पिच्छिकासे शरीरस्पर्शन नहीं

कर आलंदविधि करनेवाले मुनिओंका यह स्वरूप दिखाया है.

अब गच्छप्रतिबद्धालंदकविधिका विवेचन करते हैं–

गच्छसे निकलकर बाहर एक योजन और एक कोसपर ये मुनि विहार करते हैं. शक्तिमान आचार्य क्षेत्रके बाहर जाकर उनको अर्थपदका अध्ययन कराते हैं. अथवा आलंदविधि करनेवालोंमेंसे समर्थ मुनि आकर उनके पास अध्ययन करते हैं. एक, दो या तीन मुनि जो कि परिज्ञान, धारणा वगैरह गुणोंसे परिपूर्ण हैं वे गुरूके पास आते हैं. प्रश्नका कार्य करनेपर अपने क्षेत्रमें जाकर आहार ग्रहण करते हैं. शक्तिरहित आचार्य गच्छमें सूत्रार्थ पौरुषी करके गांवके निकट वनमें जाकर यत्नसे अर्थपदका अध्यापन करते हैं. अथवा अपने आश्रय स्थानमें ही वे इतर शिष्योंको दूर करके एकको पढाते हैं. यदि गच्छ क्षेत्रातरको चला जायगा तो आलंदविधि करनेवाले मुनि भी आचार्यकी अनुज्ञा लेकर क्षेत्रांतरको जाते हैं. जब गच्छनिवासी क्षेत्रकी शुद्धि करनेका प्रयत्न करते हैं अर्थात् कोनसा क्षेत्र योग्य है इसका यदि अन्वेषण करते हैं तो आलंदविधि करनेवाले दो मुनि भी उस क्षेत्रमें मार्गसे जाते हैं. इस प्रकार यह अथालंदविधिका विवेचन पूर्ण हुआ.

अब परिहारविधिका विवेचन करते हैं–

जिनकल्पको धारण करनेमें असमर्थ ऐसे मुनिराज परिहारसंयमका भार धारण करते हैं. अपनी शक्ति, वीर्य, आयुष्य, उपसर्गादिक विघ्न जानकर वे जिनेन्द्र भगवान्‌के पास जाते हैं. विनय कर और हात जोड कर हे भगवन् ! हम आपकी आज्ञासे परिहारसंयम धारण करनेकी इच्छा करते हैं. उनका यह भाषण सुन कर जिनको उत्कृष्ट ज्ञान अर्थात् केवलज्ञान उत्पन्न होगा अथवा जिनको विघ्न उपस्थित होगा उनको जिनभगवान रोकते हैं. जिनको जिनभगवानने आज्ञा दी है वे मुनि निःशल्य होकर प्रशस्त स्थानमें जाकर लोच कर, उत्तम निश्चयसे गुरूके पास आलोचना करते हैं और व्रतोंको विशुद्ध करते हैं. परिहार संयमके अभिमुख हुए मुनिओंमेंसे एकको सूर्योदय में कल्पस्थित आचार्य पदवीपर स्थापन करते हैं. वह उस गणमें प्रमाण माना जाता है. वह गणकी आलोचना सुनकर शुद्धि करता है.

कल्पस्थित आचार्यको छोडकर शेप मुनिओंमें अर्धमुनि प्रथम परिहारसंयम ग्रहण करते हैं. और बाकी के मुनि नंतर परिहारसंयमको ग्रहण करते हैं अतः उनको अनुपरिहारक कहते हैं. इस रीतिसे जो पीछेसे संयम

ग्रहण करनेकेलिये आचार्यके पास आते हैं उनको भी अपने गणमें स्वीकारते हैं. जितने मुनिओंसे गण क्रम हैं उतने प्रमाणका गण करके उसमें परिहारक और अनुपरिहारककी व्यवस्था करते हैं. इसलिये परिहारसयममें प्रवेश करनेवाले अनुपरिहारक मुनि एक दो और तीन होते हैं.

यदि तीन मुनि गणमें होंगे तो एक गणी है, दुसरा मुनि परिहार संयमको स्वीकार करनेवाला होता है और तिसरा अनुपरिहारी होता है. यदि गणमें पांच मुनि होंगे तो एक कल्पस्थित आचार्य, दो मुनि परिहार संयमके धारक और दो मुनि अनुपरिहारक समझने चाहिये. यदि सात मुनि होंगे तो उसमें एक गणी, तिन परिहारसयमी और तीन अनुपरिहारक मुनि होते हैं यदि नो मुनि हो तो एक गणी चार परिहारक मुनि और चार अनुपरिहारी मुनि समझने चाहिये. छहमास होनेके बाद अनुपरिहारी मुनि परिहारसंयम में पूर्ण प्रविष्ट होता है. नंतर अनुपरिहारी परिहार संयमको ग्रहण करता है. वह भी छह माससे परिहारमें निविष्ट होता है. तदनंतर कल्पस्थित आचार्य जो कि अनुपरिहार तथा परिहारक होता है. वहभी छहमासके अनंतर परिहारमें निविष्ट होता है. इस रीतीसे तीन मुनिओंको परिहारके प्रवेशमें प्रमाणसे अठारहमास परिहार चारित्रमें लगते हैं.

अब परिहार संयत मुनिओंका लिंगादिक आचार क्रम कहते हैं—

परिहार संयतमुनि वसति और आहारको छोडकर अन्यका स्वीकार नहीं करते हैं. तृण, फलक, आसन, चटाइ आदिक संयमके लिये ग्रहण करते हैं पिच्छिका भी संयमके लिये पास रखते हैं. शरीरसे प्रेम हटाकर चार प्रकारके उपसर्ग सहन करते हैं. उनमें दृढ धैर्य होनेसे वे ध्यानमें निरंतर निमग्न रहते हैं. हमारेमें बलवीर्य और सर्व गुण हैं तथापि यदि हम गणमें निवास करेंगे तो हम वीर्याचार आचरणमें कैसा ला सकेंगे ऐसा समझकर वे तीन, पांच, सात अथवा नो एषणाके लिये-आहारके लिये जाते हैं. ( ? ) रोगसे और वेदनासे पीडित होनेपर भी उसका इलाज नहीं करते हैं. अयोग्य आहारको छोड देते हैं. वाचना, प्रच्छना, और परिवर्तन रूप स्वाध्यायको छोड सूत्रार्थ पौरुषीमें भी ( ? ) सूत्रार्थकाही वारवार अनुमनन करते हैं इस रीतसि आठों प्रहरोंमें भी निद्राका त्याग कर ध्यान करते हैं. चिंतन करते हैं. स्वाध्याय कालमें प्रतिलेखनादि क्रिया अर्थात् पिच्छिकासे अंग पोछना वगैरह क्रियायें इनको नहीं होती है । क्योंकि श्मशानमें भी उनको ध्यानका निषेध नहीं है । यथाकालमें आवश्यक क्रियायें वे करते हैं. सायंकाल–सूर्यास्त समय और सूर्योदयके समयमें उपकरणोंको शुद्ध

करते हैं. शरीरसंस्कारको छोड देते हैं. और परिषहों को सहते हैं हमारमें संयमाचरण करनेके लिये योग्य मनोबल है ऐसा विचार कर तीन या पांच मुनि मिलकर प्रवृत्ति करते हैं. रोगसे अथवा आघातसे वेदना उत्पन्न हो तो उसका इलाज नहीं करते हैं. तपसे जब अतिशय थक जाते हैं. तब अपने सहायकोंका हस्त–हाथका आश्रय लेते हैं. वाचना पृच्छानादिकोंका वे त्याग करते हैं. अहोरात्रमें कदाचित्भी नहीं सोते हैं. एकचित्त होकर ध्यानमें प्रयत्न करते हैं. यदि बलात् निद्रा आ जावे तो वे प्रतिज्ञा नहीं करते हैं अर्थात् मै सोउंगाही नहीं ऐसी प्रतिज्ञा नहीं करते हैं. अर्थात् रात्रमें सोते भी हैं स्वाध्यायकालमें प्रतिलेखनादि क्रिया उनको नहीं हे श्मशानमें भी उनके लिये ध्यानका निषेध नहीं है. सामायिकादिक अवश्यकोंमें वे प्रयत्न करते हैं. प्रातःकाल और सायंकालमें पिच्छिका कमंडलु इनका वे संशोधन करते हैं. जिनमंदिर, वसतिका वगैरह सस्वामिक हो अर्थात् उनके कोई मालिक हो तो उनकी अनुज्ञासे वे उसमें रहते हैं. यदि इनके स्वामीका पता मालूम न हो तो जिसके ये जिनमंदिरादिक हैं वे हमको ठहरनेकी अनुज्ञा देवे ' ऐसा कहकर उनमें ठहरते हैं सहसा अतिचार वा अशुभ परिणाम हो गया तो ' मिथ्या मे दुष्कृतं ' ऐसा बोलकर अतिचार व अशुभपरिणामसे निवृत्त होते हैं. दश प्रकारके समाचारोंमें वे प्रवृत्ति करते हैं उनकी संघके साथ दान, ग्रहण, विनय, आपसमें बोलना ये क्रियायें नहीं होती हैं. किसी कार्यकी अपेक्षासे उनमेंसे एक मुनि भाषण करते हैं. जिस क्षेत्रमें सधर्मा मुनि होंगे उस क्षेत्रमें वे प्रवेश करते नहीं है. मौनका नियम होते हुए भी वे रास्ता पूछते हैं, किसी पदार्थमें शंका उत्पन्न हुई हो तो उसके निराकरणार्थ प्रश्न करते हैं. वसतिकाका जो स्वामी है उसके घरका पता पूछते हैं. - इस तरह तीन विषयोंमें ही वे बोलते हैं. गांवके बाहर जहा प्रवासी लोक ठहरते हैं ऐसे स्थानमें कल्पस्थित मुनि यदि अनुज्ञा दे तो ठहरते हैं. पशु, पक्षी वगैरह प्राणियोंसे जहां ध्यानमें विघ्न होता है वह स्थान वे छोडते हैं. आप कोन हैं? आप कहांसे आये हैं? आप कहां जा रहे हैं, आप यहां कितने समयतक ठहरेंगे, आप कितने मुनि हैं ऐसा पूछने पर मैं श्रमण अर्थात् मुनि हूं इतना एक ही प्रत्युत्तर देते हैं. अथवा इतर मुनि मौन धारण करते हैं. इस स्थानसे हटो, मेरेको यहां रहनेके लिये स्थान दो, मेरे घरका रक्षण करो. इस तरहसे यदि कोइ गृहस्थादिक उनको बाहर ठहरते हुये भी बोले तो वहांसे भी वे चले जाते हैं. जिसमें वे ठहरे हैं उस घरको यदि आग लगी तो वे वहांसे गमन नहीं करते हैं. अथवा गमन करते हैं. आहार यदि नहीं मिला तो तीसरे प्रहरमें दो गव्यूति प्रमाण मार्ग वे जाते हैं. यदि बडे वायुसे, महावृष्टिसे

गमनमें रुकावट उपस्थित हो तो वहां ही ठहरते हैं आगे जाते नहीं. व्याघ्र वगैरह प्राणी अथवा दुष्ट पशु यदि रास्तेमें आये तो उस रास्तेसे हट जाते हैं अथवा हटते नहीं है. पावमें यदि कांटा चुभ गया, आखोंमें यदि धूलीके कण गये तो वे निकालते हैं अथवा नहीं भी. दृढ धैर्ययुक्त ऐसे वे मुनि मिथ्यात्वचर्याराधना व आत्मविराधना और अन्य दोषोंका परिहार करते हैं अथवा नहीं हैं. तृतीययाममें भिक्षाके लिये वे उतरते हैं-आते हैं. कृपण, याचक, पशु पक्षी, ये सब चले जानेपर आहार लेनेकी इच्छा करते हैं और मौन धारण करते हैं. एक, दोन तीन, चार अथवा पांच गोचर्या जिस क्षेत्रमें होती हैं उस क्षेत्रमें आलंदिका योग करते हैं. [ जिससे पाणिपात्रमें भोजन करनेवाला मिथ्यात्वका त्याग नहीं करता है. उससे लेपाहार अथवा अलेपाहार का भक्षण कर उसका वे प्रक्षालन करते हैं [ इसका अभिप्राय ध्यानमें आता नहीं है. ]

धर्मोपदेश करनेसे यदि कोइ पुरुप आपके चरणमूलमें मैं दीक्षा लेनेकी इच्छा करता हूं ऐसा कहे तो भी उसको दीक्षा देनेका विचार वे मनसे भी करते नहीं फिर वचन और शरीर के द्वारा वे उसको क्यों दीक्षा देंगे ? उनको सहाय करनेवाले अन्य मुनि धर्मोपदेश देकर शिखासहित अथवा मुंडन जिसने किया हे ऐसे उस पुरुपोंको आचार्यके सन्निध ले जाते हैं.

क्षेत्रकी अपेक्षासे ये अथालंद विधि करनेवाले मुनि एकसो सत्तर कर्मभूमिमें होते हैं. कालकी अपेक्षासे देखा जाय तो हमेशा होते हैं. चारित्रकी अपेक्षासे इनको सामायिक और छेदोपस्थान ऐसे दो चारित्र होते हैं. तीर्थकी अपेक्षासे सर्व तीर्थकरोंके तीर्थमें ये उत्पन्न होते है. जन्मसे तीस वर्ष तक भोगों को भोगकर मुनि अवस्था में उन्नीस वर्ष तक रहते हैं अनंतर अथालंदक विधिको धारण करते हैं. ज्ञानकी अपेक्षासे इनको नो या दस पूर्वोंका ज्ञान रहता है. वेदकी अपेक्षासे ये पुरुपवेदी वा नपुंसकवेदी रहते हैं. लेश्याकी अपेक्षासे ये पद्म व शुक्ल लेश्याके धारक होते हैं ध्यानकी अपेक्षासे ये धर्मध्यानी होते हैं, संस्थानकी अपेक्षासे छहो संस्थानोंमेंसे किसी एक संस्थानके धारक होते हैं. इनके शरीरका प्रमाण कुछ कम सात हाथसे पांचसे धनुष्यतक रहता है. कालकी अपेक्षासे जघन्य आयुष्य भिन्नमूहूर्त और उत्कृष्ट आयुःस्थिति आलंदक विधि धारण करनेके पूर्व जितना आयुष्य व्यतीत हुआ है वह पूर्व कोटिमें कम करना यह उत्कृष्ट स्थिति समझनी चाहिये. उनको विक्रियाऋद्धि, चारणऋद्धि क्षीरास्रावित्वऋद्धि इत्यादि ऋद्धियां माप्त होती हैं परंतु विराग होनेसे उनका सेवन नहीं करते हैं. गच्छसे निकल

करते हैं. जिनमंदिरादिकोंमें अनुज्ञा लेकर वे रहते हैं. जिनके स्वामीका परिज्ञान नहीं है ऐसे मंदिरोंमें जिनके ये स्थान हैं वे यक्षादिक हमको आज्ञा देवें ऐसा बोलकर वहां निवास करते हैं. असीधिका व निषेधिका ये दोन विधि बाहर निकलनेके और अंदर प्रवेश करनेके समय करते हैं. निर्देशको छोडकर बाकीके दश प्रकारके समाचारोंमें वे प्रवृत्ति करते हैं. उपकरणादिकोंको देना, और ग्रहण करना, अनुपालन करना, विनय करना, वंदना करना, अन्योन्य संभाषण करना इन बातोंका संघके साथ वे त्याग करते हैं. गृहस्थ अथवा अन्य लिंगिओने साधुओने योग्य वस्तु दी तो वे लेते हैं. परंतु उनके साथ भी विनय, वंदना वगैरे बातें वे नहीं करते हैं. तीन, पांच, सात और नो ऐसे उन मुनिओंका दानादि विधि परस्पर होता है.

कप्पठिदोणुकप्पीइति—कल्पस्थित आचार्य और परिहार संयम पालनेवाले दुसरे मुनि इनका परस्पर व्यवहार होता है अर्थात् सहायता देना, ग्रहण करना, एक स्थानमें निवास करना, वंदना करना और परस्पर बोलना ये विधि होते हैं. जो पीछेसे परिहार संयम धारण करते हैं वे अनुपरिहारी हैं. वे परिहारीके साथ संवास, वंदना,विनय, अनुपालना ये विधि करते हैं. अनुपरिहारी परिहारसंयममें पूर्ण प्रवेश करनेवाले मुनिओंके साथ वंदना, संवास संभाषण ये विधि करते हैं. कल्पस्थित आचार्य मुनि अनुपरिहारीके साथ ग्रहण, संवास स्थान ये विधि करते हैं.

परिहारसंयममें पूर्ण प्रवेश करनेवाले मुनि अपने साधर्मीके साथ अर्थात् परिहारसंयम पूर्ण धारण करनेवालोंके साथ संवास ही विधि करते हैं दूसरा विधि नहीं करते हैं. कल्पस्थित आचार्य इतर मुनिके साथ रहते हैं व प्रसन्नतासे भाषण करते हैं कल्पस्थितको जब अनुकल्पी वंदन करते हैं तब कल्पास्थित धर्मलाभ ऐसा कहते हैं. गृहस्थ अन्य धर्मी साधुओंको मार्गका संशय हो तो पूछते हैं व गणके साथ बोलते हैं. जहां साधार्मिक मुनि रहते हैं उनको देखकर अथवा सुनकर उनके क्षेत्रकी प्रशंसा नहीं करते हैं, तो वंदनादिक क्यों करेंगे ? [ इन गाथाओंका अर्थ संपूर्ण तया ध्यानमें नहीं आता है भूल हुई होगी. पाठक सुधार लेवें. ] इस रीतीसे कल्पोक्त सर्व कार्य जानना चाहिये.

ये परिहार संयमी तीन भाषाओंको छोडकर मौनव्रतको धारण करते हैं. किसीने प्रश्न पूछा तो उसका संदेह दूर करना, धर्मकार्यमें अनुज्ञा देना और स्वयं प्रश्न करना ऐसी तीन भाषायें वे बोलते हैं. विहार करते समय मार्गके

विषयमें शंका हो जैसे यह मार्ग कहां चला जाता है इसका यदि निर्णय न हो तो, उपकरणादिक योग्य हैं या अयोग्य हैं इसका निर्णय होनेके लिये, और शय्याधरका घर और वसतिकाके स्वामी इस विषयमे वे प्रश्न करते हैं. (वसतिकाको बनानेवाला, उसकी मरम्मत करानेवाला और यहां आप ठहरो ऐसा कहकर वसतिका देनेवाला इन तीनोंको शय्याधर कहते हैं.) ग्रामके बाहर, श्मशानमें, शून्य घरमें, देवगृहमें, गुहामें, प्रवासी रहनेके घरमें अर्थात् धर्मशालामें और झाडके पोलमें एकवार अनुज्ञा लेकर रहते हैं. आप कोन हैं, आप कहांसे आये हैं, आप किस देशको जानेवाले हैं. यहां आप कितने दिन ठहरेंगे, आप कितने जन हैं. ऐसे प्रश्न करनेपर मैं मुनि हूं ऐसा एक ही उत्तर वे देते हैं. अन्यसमयमें वे मौन धारण करते हैं. इस स्थानसे तुम चले जाओ, हमको यह जगह दो, इस घरको संभालो ऐसा यदि कोई भाषण करे तो उस स्थानमें वे रहते नहीं हैं. तीसरे प्रहरमें आहारको जाते हैं उस समय भिक्षा मिले अथवा न मिले हमेशा दो गव्यूतितक विहार करते हैं. वृष्टि, जोरसे बेहनेवाली हवा इत्यादिकोंसे यदि बाधा हो जहां तक गमन किया है वहां ही ये स्थिर रहते हैं. व्याघ्रादि प्राणी, दुष्ट बैल वगैरह पशु आनेपर यदि वे भद्र हो तो चार हात जमीन वे पीछे हटते हैं. यदि दुष्ट हो तो एक पैर भी ये हटते नहीं. वहां ही स्थिर खडे होते हैं नेत्रोंमें धूल यदि गई हो अथवा पावमें यदि कांटा चुभ गया हो तो स्वयं वे मुनि निकालते नही हैं. यदि दूसरे कोई पुरुष निकाले तो मौनसे रहते हैं तीसरे प्रहरमें ही नियमसे भिक्षाको जाते हैं. जिस क्षेत्रमें छह भिक्षा अपुनरुक्त होती हैं वह क्षेत्र रहनेके लिये योग्य समझते हैं. बाकीका क्षेत्र अयोग्य समझते हैं.

क्षेत्र, तीर्थ, काल, चारित्र, पर्याय, श्रुत, वेद, लेश्या, ध्यान संहनन, संस्थान शरीरकी दीर्घता, आयुष्य, लब्धि, अतिशय ज्ञानोत्पत्ति और सिद्धि इतने नियोग यहां वर्णन करने योग्य हैं ऐसा समझना चाहिये

ये मुनि क्षेत्रकी अपेक्षासे भरत और ऐरावत क्षेत्रमें होते हैं. तीर्थकी अपेक्षासे पहिले तीर्थकर व अन्तिम तीर्थकरके समय होते हैं. कालकी अपेक्षासे उत्सर्पिणी और अवसर्पिणी कालमें होते हैं. चारित्रकी अपेक्षासे उनको छेदोपस्थापना चारित्र होता है. प्रथम तीर्थकरके समयमें इनके शरीरकी अवस्था देशोनपूर्व कोटी रहती है, और अन्तिम तीर्थकरके समयमें एकसो वीस वर्षकी अवस्था होती हैं. जन्मतः तीस वर्षतक भोगोपभोगका सुख-अनुभव लेकर मुनिपर्यायमें उन्नीस वर्ष व्यतीत होते हैं. इनको दशपूर्वीका ज्ञान होता है. वेदसे ये पुरुषवेदी होते हैं लेश्याकी अपेक्षासे इनको तेजो लेश्या, पद्मलेश्या और शुक्ल लेश्या होती है. ध्यानकी अपेक्षासे उनको धर्मध्यान

होता है. इनको पहिले तीन संस्थान होते हैं. और छहों संहननोंमेंसे कोई एक संहनन होता है. इनके देहकी अवगाहना सात हाथसे लेकर पांचसो धनुष्यपर्यंत होती है. इनका आयु अठारह मास अथवा पूर्व कोटी होता है. उनको चारण ऋद्धि, आहारक ऋद्धि अथवा विक्रिया ऋद्धि और आहारक ऋद्धि होती है. योगसमाप्तिके अनंतर अवधिज्ञान, मनःपर्यय अथवा केवल ज्ञान उत्पन्न होता है इस तरह परिहार संयमका विधि कहा है.

जिनकल्पका निरूपण–

जिन्होंने राग द्वेष और मोहको जीत लिया है, उपसर्ग और परीषहरूपी शत्रुके वेगको जो सहते हैं और जो जिनेंद्र भगवानके समान विहार करते हैं ऐसे मुनिओंको जिनकल्पी मुनि कहते हैं इतनी ही विशेषता इन मुनिओंमें रहती है. बाकी सब लिंगादिक आचार प्रायः जैसा पूर्वमें वर्णन किया है वैसा ही इनका भी समझना चाहिये.

क्षेत्रादिकोंके द्वारा इनका वर्णन करते हैं—

सर्वधर्म क्षेत्रोंमें ये जिनकल्पी मुनि होते हैं. कालकी अपेक्षासे ये मुनि सर्व कालमें होते हैं ये सामायिक और छेदोपस्थापना चारित्रके धारक होते हैं. तीर्थकी अपेक्षासे सर्व तीर्थकरोंके तीर्थमें इनकी उत्पत्ति होती है. जन्मसे तीस वर्षतक भोगोंको भोगते हैं. तदनंतर उन्नीस वर्ष तक मुनिपर्यायमें रहकर अनंतर जिनकल्पी मुनि होते हैं. इनको नो या दश पूर्वोंका ज्ञान होता है. इनको तेजोलेश्या, पीतलेश्या, और पद्मलेश्या ये लेश्यायें होती हैं. धर्मध्यान और शुक्लध्यानमें लीन रहते हैं इनका प्रथम संहनन वज्रर्षभनाराच नामका होता हैं. छहसंस्थानोंमेंसे कोई एक संस्थान होता है. इनके देहका आयाम सात हाथको आदिलेकर पांचसो धनुष्य पर्यंत होता है. इनका जघन्य आयुष्य भिन्नमुहूर्तादिक रहता है. और उत्कृष्ट आयुष्य कुछ कम पूर्व कोटि वर्षका होता है. इनको विक्रिया, आहारक, चारण और क्षीरास्रावितादिक ऋद्धि होती है परंतु ये वीतराग होनेसे उनका उपयोग करते नहीं. इनको अवधिज्ञान और मनः पर्ययज्ञान होता है. कितनोंहीको केवलज्ञान भी होता है. जो केवली होते हैं वे नियमसे मोक्ष प्राप्त कर लेते हैं।

एवमथालंदादिक प्रतिपद्य चारित्रविधिं मयोत्साह' कर्तव्यः इति विचारयति—

एवं विचारयित्ता सदि माहप्पे य आउगे असदि ॥
अणिगूहिदबलविरिओ कुणदि मदिं भत्तवोसरणे ॥ १५६ ॥

सत्येव स्मृतिमाहात्म्ये विचार्य सति जीविते ॥
भक्तत्यागे मतिं धत्ते वलवीर्यनिगूहकः ॥ १५८ ॥

विजयोदया—एव विचारयित्ता-एवमुक्तेन प्रकारेण । विचारयित्ता विचार्य । सदिमाहप्पे य स्मृतिमाहात्म्ये च । असदि आउगे आयुष्यसति दीर्घे । अणिगूहिदबलाविरिओ असवृतबलसहायं वीर्यं आहारत्यागामाभ्या कृतं बलं । कुणइ करोति । मइ मतिं । भत्तवोसरणे । भज्यते सेव्यते इति भक्त आहार । तस्य त्यागं आहारेण समयसाधनेन शरीरस्थितिं चिर कृत्वा स्वपरोपकार' कृत । आयुष्यल्पे न शरीरमवस्थातुमलमाहारग्रहणेऽपि । तेन त्याज्यो मयाहार इति भावोऽस्य । अत एव सूत्रकारेणेदमुक्तं दीहो परियाओ इति । अवशिष्टकालाल्पताख्यापनाय न केवलमायुषोऽल्पता एव भक्तत्यागमतेः कारण, अपि तु अन्यदपीति ।

मूलारा—सदि माहप्पे स्मृतिमाहात्म्ये । जह्मा चरित्तसारो इत्यादिजिनागमरहस्योपदेशश्रवणाहितसंस्कारो द्बोधवशान्मरणान्तेऽवश्यमहं विधिना सल्लेखना करिष्यामि इत्थंभूतायाः स्मृतेर्माहात्म्ये स्फारीभावे सति । न परमत्रैव । असदि आयुष्यसति च । ईषत् सत् असत् तस्मिन् असति । अल्पे सतीत्यर्थः ।

इस रीतीसे अथालंदादिक विधीको जानकर चारित्र धारण करनेमें मेरेको उत्साह करना योग्य है इसका विचार मुनि करते हैं—

अर्थ—उपर कहे हुए अथालंदादि चारित्रविधि का विचार कर चारित्र धारण करना ही आगम पढनेका सार है. मैं मरणसमयमें अवश्य सल्लेखना धारण करूंगा इस तरहका स्मृतिमाहात्म्य यदि आत्मामें स्फुरायमान होगा तो मुनि आहारका त्याग करनेमें बुद्धि लगाते हैं. अपना आयुष्य अब दीर्घ नहीं है यह भी

जब उसको मालुम पडता है तो वह आहारका त्याग करनेमें मतिको उद्युक्त करता है. उस समय आहार और व्यायामसे प्राप्त किया हुआ बल वह छिपाता नहीं है धर्म साधनको सहायता प्रदान करनेवाले आहारसे मैने शरीर धारण कर चिरकाल तक स्वपरोपकार किया है परंतु जब आयुष्य थोडा रहता है तब शरीर, आहार ग्रहण करनेपर भी टिक नहीं सकता है. इस लिये मेरेको अब आहारका त्याग करनाही योग्य है. ऐसा वह मुनि विचार करता है. दीर्घकालतक मैंने यह मुनिपर्याय धारण किया है अब आयुष्य अल्प रहा है. यह आहार त्यागका कारण है ।

---

पुव्वुत्ताणण्णदरे सल्लेहणकारणे समुप्पण्णे ॥
तह चेव करिज्ज मदिं भत्तपइण्णाए णिच्छयदो ॥ १५७ ॥

**संन्यासकारणे जाते पूर्वोक्तान्यतमे सति ॥**
**करोति निश्चितं बुद्धिं भक्तत्यागे तथैव सः ॥ १५९ ॥**

विजयोदया—पुव्वुत्ताणण्णदरे पूर्वमुक्तानां 'वाहीव दुप्पसज्झा' इत्यादीना मध्ये अन्यतरस्मिन् । सल्लेहण-कारणे सम्यक् कायकषायतनूकरण सल्लेखना तस्याः कारणे वा । समुप्पण्णे समुपस्थिते । तह चेव तथैव च । यथाल्प आयुषि करोति भक्तत्यागे मतिं । तथैव णिच्छयदो भत्तपइण्णाए मदिं करेज्ज । निश्चयतो भक्तप्रत्याख्याने मतिं कुर्यात् । एतद्गाथाद्वय सूत्रकारवचनम् ।

न केवलमायुषोऽल्पतैव भक्तत्यागमतेः कारणमपि तु तदन्यदपि इति दर्शयन्नाह—

मूलारा—यथा आयुष्यल्पे तथैवात्रापीत्यर्थः ।

आयुष्यकी अत्यल्पता ही आहार त्यागके प्रति कारण है ऐसा नहीं है किंतु और भी कारण है—

अर्थ— इसी ग्रंथमें आहारत्यागके दुसरे भी कारण पूर्वमें बताये हैं 'वाही व दुप्पसज्झा' इत्यादि गाथामें कारणोंका उल्लेख किया है. जैसे असाध्य व्याधि होनेपर आहारका त्याग करना चाहिये वगैरह इन कारणोंमेंसे कोई कारण उपस्थित होनेपर सल्लेखना करनी चाहिये, शास्त्रोक्त विधि की अनुसार शरीर और कषायोंको कृश करना सल्लेखना है जैसे अल्पायुष्य रहनेपर आहार त्याग करनेमें अपनी बुद्धि लगानी चाहिये उसी तरह

पूर्वोक्त कारण उपस्थित होने पर भी निश्चयसे भक्तप्रत्याख्यानमें—आहारके त्यागमें अपनी मतिको मुनि लगावें. उपर्युक्त दो गाथाओंमें सूत्रकारने अपना अभिप्राय व्यक्त किया है.



---

आराधकस्य मन प्रणिधानं प्रदर्शयति—

जाव य सुदी ण णस्सदि जाव य जोगा ण मे पराहीणा ॥
जाव य सद्धा जायदि इंदियजोगा अपरिहीणा ॥ १५८ ॥

योगा यावन्न हीयंते यावन्नश्यति न स्मृतिः ॥
श्रद्धा प्रवर्तते यावद्यावदिंद्रियपाटवम् ॥ १६० ॥

विजयोदया—जाव य सुई ण णस्सदि यावत्स्मृतिर्न नश्यति । रत्नत्रयाराधनागोचरा अनुभूतविषयग्राहिणी तदित्थंभूतमिति प्रवर्तमाना स्मृतिरित्युच्यते मतिज्ञानविकल्पः । वस्तुयाथात्म्यश्रद्धानं, दर्शनं तद्याथात्म्यावगमो ज्ञानं, समता चारित्रमिति । श्रुतेनावगते परिणामत्रये यदुपजायते सार्तज्ञानं तदिह स्मृतिरित्युच्यते । स्मृतिमूलो व्यवहार, स्मृतौ नष्टाया न स्यादिति, स्मृतिसद्भावकाल एव प्रारभ्या मया सल्लेखनेति चिंत्यम् । जाव य यावच्च । जोगा योगा आतापनादय । ण मे पराहीणा न मे परायत्ता शक्तिवैकल्यात् । विचित्रेण तपसा निर्जरा विपुला कर्तुकामस्य मम तपोऽतिचारे सा न भवतीति यावन्निरतिचारं इद तपस्तावत्सल्लेखनां करोमीति कार्या चिंता । जाव य सद्धा जायदि यावच्छ्रद्धा जायते रत्नत्रयमाराधयितु । ताव खम मे काउमिति वक्ष्यमाणेन संबंध. । उपशमकालकरणलब्धयो हि दुर्लभा. प्राणिना सुहृदो विद्वास इव । मूलं ता श्रद्धाया, न च विनष्टा सा पुनर्लभ्यते । न च तामंतरेणातिशयवतामाहारत्याग सुखेन संपद्यते । इदियजोगा इद्रियाणा चक्षुरादीना रूपादिभिर्विषयै संबद्धा अपरिहीणा हीना न भवति । दृक्श्रोत्रेंद्रियाणामपाटवे दर्शनश्रवणाभ्या परिहार्योऽसयम. कथ परिन्हियते । दृष्ट्वा श्रुत्वा स इदमयोग्यमिति वेत्ति नान्यथा ।

आराधकस्य प्रणिधानं प्रदर्शयन् गाथाचतुष्टयमाह—

मूलारा—सदी स्मृति· । सा चेह रत्नत्रयाराधनागोचरा । स्मृतिसद्भावकाल एव प्रारभ्या मया सल्लेखनेति भावः । जोगा आतापनादयः । पराहीणा परायत्ता· स्युः शक्तिवैकल्यात् । यावन्निरतिचारं तप इति भावः । सद्धा रत्नत्रयाराधने रुचि· । जायदि उदितोदिता भवति । उपशमकालकरणलब्धयो हि दुर्लभा इति भाव । इंदियजोगा चक्षुरादीना इंद्रियादिभि· सह संवधाः । दर्शनश्रवणमूलो ह्यसंयमत्याग. ।

आराधकके चित्तकी एकाग्रताका वर्णन करते हैं.

अर्थ—रत्नत्रयाराधनाको विषय करनेवाला, अनुभूत विषय जो रत्नत्रय उसको जाननेवाला, और जिसमें 'वह' इस शब्दसे ज्ञानाकार प्रदर्शित किया जाता है ऐसे ज्ञानको स्मृति कहते हैं यह स्मृति मतिज्ञानका एक भेद है. वस्तुके यथार्थ स्वरूपपर श्रद्धान होना उसको सम्यग्दर्शन कहते हैं वस्तुके यथार्थ स्वरूपको जानलेना सम्यग्ज्ञान है. और रागद्वेषाभावरूप समताको चारित्र बोलते हैं. इस रत्नत्रयका शास्त्रोंसे स्वरूप जाननेपर सम्यग्दर्शनरूप, सम्यग्ज्ञानरूप और चारित्र रूप तीन प्रकारके परिणाम आत्मामें उत्पन्न होते हैं. इस परिणामत्रय संबंधी जो स्मरणात्मक ज्ञान उत्पन्न होता है उसको इस प्रकरणमें स्मृति कहना चाहिये. जितना जगत्का व्यवहार चल रहा है उसको स्मृतिही कारण है. स्मृतिका नाश होनेपर जगद्व्यवहार नष्ट होगा. यह वात ध्यानमें रखकर स्मृतिज्ञान है तबतक ही मेरेको सल्लेखना धारण करना योग्य है ऐसा विचार करना चाहिये. जबतक मेरेमें आतापनादि योग धारण करनेका सामर्थ्य मौजूद है तबतक मैं सल्लेखना करूंगा. शक्ति कम हो जानेसे आतापनादि योग मैं कर नहीं सकूंगा तब सल्लेखना मेरेद्वारा निभाना कठिन हो जावेगा. शक्तिरहित होनेपर नाना प्रकारके तपोसे मैं कर्मको निर्जीर्ण करूंगा ऐसी इच्छा करना व्यर्थ ही है. क्यों कि उस समय मेरे द्वारा जो तप किया जावेगा उसमें अतिचार उत्पन्न होंगें. तपमें अतिचार लगनेपर सल्लेखना कैसी सिद्ध होगी? अतः जबतक निरतिचार तप करनेमें मेरा सामर्थ्य है तबतक मैं सल्लेखना धारण करनेके लिये 'उद्युक्त होऊं' ऐसा मनमें विचार करना चाहिये. जबतक रत्नत्रयाराधन करनेमें मन श्रद्धायुक्त—उत्साहयुक्त हैं तबतक मैं सल्लेखना धारण करनेमें समर्थ होऊंगा ऐसा विचार साधु करे. प्राणिओंको उपशमलब्धि, काललब्धि और करणलब्धि इनकी प्राप्ति होना दुर्लभ है. विद्वान् मित्र जैसे प्राप्त होना दुर्लभ है ये तीन लब्धियां श्रद्धाके मूलकारण हैं. श्रद्धा विनष्ट हो गई तो फिर उनकी प्राप्ति होना अतिशय दुर्लभ है. श्रद्धाके विना अतिशययुक्त मनुष्य भी आहारका त्याग सुखसे नहीं कर सक्ता है. जबतक इंद्रियां अपने विषयको ग्रहण करनेमें समर्थ हैं तबतक सल्लेखना धारण करना योग्य है. नेत्र और कर्ण अपने विषयको ग्रहण करनेमें असमर्थ होनेपर देखनेसे और श्रवण करनेसे जो असंयमका परिहार होता है वह कैसा होगा? देखकर और सुनकर यह अयोग्य है ऐसा मुनि जानेंगे अन्यथा नहीं.

---

जाव य खेमसुभिक्खं आयरिया जाव णिज्जवणजोग्गा ॥

अत्थि तिगारवरहिदा णाणचरणदंसणाविसुद्धा ॥ १५९ ॥

क्षेमं यावत्सुभिक्षं च संति नष्टास्त्रिगारवाः ॥

यावन्निर्यापका योग्या रत्नत्रितयसुस्थिताः ॥ १६१ ॥

विजयोदया—जाव य खेमसुभिक्खं यावच्च क्षेमसुभिक्ष, स्वचक्रोपद्रवस्य व्याधेर्मार्याश्चाभाव' क्षेम इत्युच्यते। प्रचुरधान्यता सुभिक्षत्वम् । एतदुभयमंतरेण दुर्लभा निर्यापका', तानन्तरेण चतुष्काराधना । आयरिया जाव आचार्या यावत् । अत्थि सान्ति । कीदृग्भूता णिज्जवणजोग्गा निर्यापकत्वयोग्या' । तिगारवरहिदा गारवत्रयरहिता ऋद्धिरससातगुरुका· ये न भवन्ति । ऋद्धिप्रियो ह्यसंयतमपि जनं निर्यापकत्वेन स्थापयति । स्वयं च नासंयमभीरुर्भवति । असंयमकारणं अनुमननं च न परिहरतीति । रसासातगुरुकौ क्लेशासहौ आराधकस्य शरीरपरिकर्म कथं कुरुत ? किं स्वयं सरागो वैराग्यं परस्य संपादयत्येवेति न नियोगोऽस्ति । णाणचरणदसणविसुद्धा ज्ञानचारित्रदर्शनेषु विशुद्धा' निर्मलाः । जीवादियाथात्म्यगोचरता ज्ञानस्य विशुद्धि· । दर्शनस्यापि समीचीनज्ञानसहभाविता, अरक्तद्विष्टता च चारित्रशुद्धि' । शुद्धज्ञानचरणदर्शनशुद्धा' ज्ञानदर्शनचारित्रशुद्धा भण्यते । यथा प्रकृष्टशुक्लगुणयोगाच्छुक्लतम इत्युच्यते पटादि· ॥

मूलारा—क्षेमं स्वचक्रपरचक्रोपद्रवमारिगदाद्यभावः । सुभिक्खं प्रचुरधान्यता । तद्द्वयं हि विना निर्यापका दुर्लभाः स्युः । णिज्जवणजोग्गा णिज्जवण संसारार्णवान्निर्यात' प्रयोजकत्वं । तत्र योग्याः समर्थाः । तिगारवरहिया ऋद्धिरससातगुरुका ये न स्युः । ऋद्धिप्रियो ह्यसयतमपि जनं निर्यापकत्वेन स्थापयति । स्वय वा नासंयमाद्बिभेति । नाप्यसंयमकारिणीमनुमतिं त्यजति । रससातगुरुकौ तु क्लेशासहौ कथमाराधकस्य कायपरिकर्म कुरुत ।

अर्थ—जबतक देशमें क्षेम और सुभिक्ष है तबतक शरीरका त्याग करना मेरे लिए योग्य अवसर है. अपने देशके सैन्यसे उपद्रव न होना, और किसी रोगसे और मारी रोगसे देश पीडित न होना ऐसी अवस्थाको क्षेम कहते है. और देशमें धान्यकी समृद्धि होना सुभिक्षता है. देशमें ये दोनो परिस्थितियां जबतक हैं तबतक सल्लेखना धारण करना श्रेयस्कर है. क्षेम और सुभिक्षताके अभावमें निर्यापकोंकी प्राप्ति होना दुर्लभ होता है इसलिए सल्ले-

१ इत आरभ्य ' ताव समं ' ' एवं सदि परिणामो ' ' संजम साधणमेत्त ' इति गाथात्रयं सव्याख्यं खपुस्तके नष्टमिति ।

खनाके लिए इन तीनोंकी आवश्यकता है. इन तीनोंका अभाव होनेपर रत्नत्रयाराधना और तपआराधनाकी सिद्धि होना दुर्लभ है. निर्यापकत्वके योग्य आचार्य जबतक देशमें विद्यमान हैं तबतक सल्लेखना करना चाहिए. ऋद्धिगारव, रसगारव, और सातगारव इनसे रहित आचार्य हो तो उनसे सल्लेखना की सिद्धि मुनि कर सकते हैं जिनको ऋद्धि प्रिय है ऐसे आचार्य असंयत पुरुषको भी निर्यापक पदमें स्थापेंगे. स्वयं भी असंयमसे भययुक्त न होंगे असंयमके कारणभूत अनुमोदनका उनसे परिहार होना असंभवनीय होता है जो आचार्य रसप्रिय और सुखप्रिय हैं वे स्वयं क्लेश सहन करना नहीं चाहते हैं. अत' वे आराधकके देहकी शुश्रूषा कैसी करेंगे ? स्वयं सरागी आचार्य आराधकमें वैराग्यके भाव उत्पन्न करेंगे यह निश्चय नहीं है. जो आचार्य ज्ञान, दर्शन और चारित्र को निरतिचारतया पालते हैं उनसे ही आराधककी सल्लेखना सधेगी जो जीवादि पदार्थोंके यथार्थस्वरूप को पहिचानता है वही ज्ञान विशुद्ध समझना चाहिये. दर्शन भी सम्यग्ज्ञान का साथी होता है. रागद्वेषका अभाव होनेसे चारित्रमें निर्मलता आती है. अर्थात् निर्मल रत्नत्रयधारक आचार्य से ही आराधक सल्लेखना धारण कर सकता है अन्यथा नहीं.

---

ताव खमं मे कादुं सरीरणिक्खेवणं विदुपसत्थं ॥
समयपडायाहरणं भत्तपइण्णाणियमजण्णं ॥ १६० ॥

तावन्मे देहनिक्षेपः कर्तुं युक्तो बुधेहित' ॥
भक्तत्यागो मतः सूत्रे व्रतयज्ञो ध्वजग्रहः ॥ १६२ ॥

विजयोदया—ताव खम मे काउं । तावद्युक्त कर्त्तु मम । किं ? सरीरणिक्खेवणं शरीरनिक्षेपणं शरीरत्यजनं । विदुपसत्थ विद्वज्जनस्तुतं आत्महितत्वात् । समयपडागाहरणं समय' सिद्धात तस्मिन् कीर्तिता पताका आराधना पताकेव पताका उपमार्थ. । यथा पताका वस्त्रादिरचिता जयादिकं प्रकटयति । एवमियं आराधनापि भवनिर्मुक्ति प्रकटयति । तस्या हरणं ग्रहणं । भत्तपइण्णं भक्तप्रत्याख्यानं णियमजण्णं व्रतयज्ञं । ननु शरीरत्यागोऽन्य', अन्यज्ज्ञानं, श्रद्धान, तप.खु परिणतिरन्यान्यद्भक्तत्यजनं, अन्यानि च व्रतानि तत्कथं सामानाधिकरणनिर्देशः ? अत्रोच्यते-प्रत्येकमभिसंबंध. कार्य । ताव खमं मे काउं इत्यनेन शरीरनिक्खेवण इत्यादीना । ततोऽयमर्थ -शरीरत्यजन, सम्यग्दर्शनादिपरिणमनं, भक्तप्रत्याख्यान, व्रतयज्ञश्च तावत्कर्तुं अयुक्तमिति ।

मूलारा—खमं क्षमं युक्तं। णिक्खेवणं त्यजनं। विदुपसत्थ विद्वज्जनसस्तुतं स्वहितत्वात्। समयपडाया-हरणं पताकेव पताका आराधनोच्यते। भाविन्या मुक्तेर्जयश्रियः प्रकटनात्। समये सिद्धान्ते कीर्तिता पताका तस्या हरणं ग्रहणं। णियमजण्णं व्रतयज्ञं शरीरत्यजन। सम्यग्दर्शनादिपरिणमनं भक्तप्रत्याख्यानं। व्रतयज्ञश्च तावत्कर्तुं युक्ता। किंविशिष्टासौ ? शरीरणिक्खेवणं देहममत्वत्यागहेतुकत्वात्। पुनः किंविशिष्टा समयपडायाहरणं। मरणे आराधना परिणतेस्तत्साध्यत्वात्। अत एव सा व्रतयज्ञः समीहितार्थसाधकं व्रतम्।

अर्थ—उपर्युक्त कारणोंका सद्भाव होनेपर शरीरका त्याग करना मेरेको योग्य है और यह आत्महितका करनेवाला होनेसे विद्वज्जन इसकी प्रशंसा करते हैं. यह शरीरका त्याग अर्थात् सल्लेखनाराधना आगममें जयपताकाके समान माना है. जैसे पताका वस्त्रादिसे रची जाती है और वह जयादिकको व्यक्त करती है वैसे यह आराधना भी संसारसे मुक्तता की सूचक होती है. उपर्युक्त कारण के सद्भावमें शरीरका त्याग करना मानो हाथमें आराधना पताका धारण करना है. यह भक्तप्रत्याख्यान अर्थात् आहारत्याग व्रतयज्ञ है. शंका—शरीरत्याग भिन्न है, ज्ञानगुण भिन्न है श्रद्धा, चारित्र और तपमें परिणति ये चारों भी भिन्न ही हैं और आहार का त्याग करना उनसे भिन्न है और व्रत भी भिन्न हैं अतः भक्तप्रत्याख्यानके साथ इनकी समानाधिकरणता कैसी सिद्ध होगी ? ' ताव खमं मे काउं ' इस वाक्यसे शरीरनिक्खेवणं इत्यादिकोंका संबन्ध करना चाहिये ऐसा करनेसे समानाधिकरणता सिद्ध होगी इसका अभिप्राय यह है—जबतक उपर्युक्त कारणोंका सद्भाव न होगा तबतक शरीरत्याग, सम्यग्दर्शनादिरूपसे परिणमन, आहारोंका त्याग और व्रतयज्ञ करना अयोग्य होगा.

---

व्यावर्णितस्य परिणामस्य गुणमाहात्म्यकथनायोत्तरगाथा—

एवं सदिपरिणामो जस्स दढो होदि णिच्छिदमदिस्स ॥
तिव्वाए वेदणाए वोच्छिज्जदि जीविदासा से ॥ १६१ ॥

एवं स्मृतिपरिणामो निश्चितो यस्य विद्यते ॥
तीव्रायामपि बाधायां जीविताशास्य नश्यति ॥ १६२ ॥

इति पर्यायसूत्रम् ॥

विजयोदया—तो पश्चात्। भट्टबोधिलाभो विनष्टदीक्षाभिमुखबुद्धिलाभः। अणंतकालं भमइ अनंतकालं भ्रमति। क भवण्णवे भवार्णवे। भीमे भयकरे। जम्मणमरणावत्ते जन्ममरणावर्ते। जोणिसहस्साउले चतुरशीतियोनिसहस्राकुले ॥

ततः किं स्यादित्याह—

मूलारा—भट्टबोहिलाहो नष्टदीक्षाभिमुखबुद्धिलाभ । अणंतकालं अर्द्धपुद्गलपरिवर्तमात्रं ॥

अर्थ—इस भावशल्यसे दीक्षाभिमुख बुद्धिका लाभ नहीं होता है अर्थात् मैंने मुनिदीक्षा व्यर्थ ली है ऐसा विचार क्षपकके मनमें आता है. भावशल्यसे यह जीव अनंतकालतक अर्थात् अर्धपुद्गलपरिवर्तन कालतक चोरासी लक्षयोनियुक्त, इस भयंकर भवसमुद्रमें भ्रमण करता है. जिसमें जन्म मरणरूपी भोंवरें हैं.

---

तत्थ य कालमणंतं घोरमहावेदणासु जोणीसु ॥
पच्चंतो पच्चंतो दुक्खसहस्साइ पप्पेदि ॥४६८॥
तीव्रव्यथासु योनीषु पच्यमानः स संततं ॥
तत्र दुःखसहस्राणि दीनो वेदयते चिरम् ॥ ४८१ ॥

विजजोदया—तत्थ य तत्र च भवार्णवे। अणतकाल दुक्खसहस्साइ पप्पेदि इति पदघटना। अनंतकालं दुःखसहस्राणि अनुभवति। घोरमहावेदणासु जोणीसु पच्चतो घोरमहावेदनासु योनिषु पच्यमान' ॥

भवे भ्राम्यन्किं करोतीत्याह—

मूलारा—पच्चंतो पच्चंतो पुनः पुनरतिग्लप्यमानः ॥

अर्थ—इस घोर संसारसमुद्रमें अनंत कालतक जिनमें भयंकर वेदनायें हैं ऐसी कुयोनिओंमे पचते हुए इस क्षपकको सहस्रो दुःख भोगने पडते हैं

---

तं न खु खमं पमादा मुहुत्तमवि अत्थिदुं ससल्लेण॥
आयरियपादमूले उद्धरिदव्वं हवदि सल्लं ॥ ४६९ ॥

मुहूर्तमप्यतः स्थातुं सशल्येन न शक्यते ॥
आचार्यपादयोर्मूले तदुद्धर्तव्यमंजसा ॥ ४८२ ॥

विजयोदया—त तस्मात् । मुहुत्तमवि अत्थिदुं ससेल्लण न खमो खु मुहूर्तमात्रमपि आसितुं शल्यसहितेन रत्नत्रयेण सह न शक्त' प्रमादवशाद्यति संसारभीरु । आयरियपादमूले उक्तगुणस्याचार्यस्य पादमूले । उद्धरिदव्वं हवदि सल्लं शल्यमुद्धर्तव्यं भवति।

प्रकृतमुपसंहारन्नाह—

मूलारा —ण खमं न युक्तं । पमादा प्रमादवशात् ॥

अर्थ—इसलिये क्षपकको प्रमादसे एक मुहूर्त कालतक भी शल्यसहित रत्नत्रय धारण करना योग्य नहीं हैं. अतः संसारभयसे युक्त क्षपक आयोपायदर्शक आचार्यके पास भावशल्य का उद्धार करें.

---

तम्हा जिणवयणरुई जाइजरामरणदुक्खवित्तत्था ॥
अज्जवमद्दणसंपण्णा भयलज्जाउ मोत्तूण ॥ ४७० ॥

जिनेंद्रवचनश्रद्धा जरामरणभीरवः ॥
निराकृतभयव्रीडाः संपन्नार्जवमार्दवाः ॥ ४८३ ॥

विजयोदया—तह्मा तस्मात् । जिणवयणरुई जिनागमे श्रद्धावंतः । जाइजरामरणदुक्खवित्तत्था जातिजरामरणदुःखवित्रस्ता. । अज्जवमद्दवसपण्णा आर्जवेन मार्दवेन युक्ता. । भयलज्जाओ भयं लज्जा वा । मोत्तूण मुक्त्वा ॥

स्थितार्थमाह—

मूलारा—वित्तत्था वित्रस्ताः । अज्जवमद्दवसंपण्णा आर्जवेन मार्दवेन च युक्ता निर्जितमायामाना इत्यर्थः ॥

अर्थ—इसवास्ते जिनेश्वरके आगममें श्रद्धा रखनेवाले जन्म, बुढापा, मरण के दुःखोंसे भययुक्त, निष्कपटता, विनय इन गुणोंसे परिपूर्ण ऐसे क्षपकको भय और लज्जा छोडकर अपराधकथन करना योग्य है.

---

उप्पाडित्ता धीरा मूलमसेसं पुणब्भवलयाए ॥
संवेगजणियकरणा तरंति भवसायरमणंतं ॥ ४७१ ॥

पुनर्भवलतामूलमुत्पाट्य निखिलं बुधाः ॥
संवेगोत्पन्नवैराग्यास्तरन्ति भववारिधिम् ॥ ४८४ ॥

विजयोदया—उप्पाडित्ता उत्पाट्य । धीरा । किं मूलं । कथं असेसं निरवशेष । कस्य मूलं ? पुणब्भवलयाए पुनर्भवलतायाः । किं तन्मूलं ? शल्यं । संवेगजणियकरणा ससारभीरुतोत्पादितक्रिया । तरति तरति । भवसायरमणतं भवसागरमनंतं ॥

मूलारा—मूलं शल्यं । करणं क्रिया समाधिमरणमिति यावत् ॥

अर्थ—संसाररूपी वेलीका मानो मूल ऐसा भावशल्य धीर क्षपक समूल उखाडकर फेक देते हैं, और संसारका भय मनमें धारण कर चारित्राचरणका अंगीकार करते हुए इस भयंकर संसारसमुद्रसे पार होते हैं.

---

उक्तवस्तूपसंहारार्थो गाथा—

इय जइ दोसे य गुणे ण गुरू आलोयणाए दंसेइ ॥
ण णियत्तइ सो तत्तो खवओ ण गुणे ण पारिणमइ ॥ ४७२ ॥

तपःप्रसूचने दोपं दोपाणां सूचने गुणं ॥
एवं दर्शयते सूरिरायापायप्रदर्शक ॥ ४८५ ॥
तदानीं क्षपको नूनं हेयादेयविमूढधीः ॥
निवर्तते न दोपेभ्यो न गुणेपु प्रवर्तते ॥ ४८६ ॥

विजयोदया—इय एवं । जदि गुरू ण दसेदि यदि गुरुर्न दर्शयेत् क्षपकस्य । किं आलोयणाए गुणे स्वापराधकथनस्य गुणान् । दोसे य दोपांश्च यदि न दर्शयेत् । आलोयणाए इति वाक्यशेप । सो खवगो ण णियत्तदि । असौ क्षपको न निवर्तते । कुत ? तत्तो पूर्वोक्तदोपान्मायाशल्यात् । गुणे य ण परिणमदि गुणे च नि शल्यत्वेन परिणमते ॥

उक्तार्थान्यथाकरणे दोपमाह—

मूलारा– दोसे दोपान् । सामर्थ्यादनालोचनाया । तत्तो मायाशल्यलक्षणाद्दोपात् । गुणे निःशल्यत्वे ॥

उपर्युक्त विपयका उपसंहार करते हैं—

अर्थ—अपने अपराध कहनेसे रत्नत्रयविशुद्धि नामक गुण प्राप्त होता है और न करनेसे संसारभ्रमण

करना पडता है अर्थात् संसारभ्रमण नामका महादोष उत्पन्न होता है ऐसा यदि आचार्य न दिखावेंगे तो क्षपक मायाशल्यका त्याग न करेगा और निःशल्य होकर गुणोमें तत्पर न होगा.

---

तह्मा खवएणाओपायविदंसिस्स पायमूलम्मि ॥
अप्पा णिव्विसिदव्वो धुवा हु आराहणा तत्थ ॥ ४७३ ॥

आयापायदिशस्तु समीपे स्थेयं बुद्धिमता क्षपकेण ॥
तत्राराधयते चतुरंगं नूनं विघ्नमशेषमपास्य ॥ ४८७ ॥

इति आयापायदिक् ॥

विजयोदया—तह्मा तस्मात् आयोपायदर्शिनः पादमूले यस्माद्दोषान्निवर्तते क्षपको गुणे च परिणमते तदुभयार्थी च । तह्मा तस्मात् खवगेण आयोपायविदंसिस्स गुणदोषदर्शिनः । पादमूले । अप्पा णिव्विसिदव्वो आत्मा, स्थापयितव्यः । तत्र गुणमाचष्टे धुवा खु आराहणा तत्थ निश्चिता रत्नत्रयाराधना तत्र । आयोपायः ॥

आयापायविदर्शिसूरेरात्मसमर्पणेऽवश्यंभाविनीमाराधनामभिधत्ते—

मूलारा—णिव्विसिदव्वो स्थापयितव्यः । ध्रुवा निश्चिता ॥ आयोपायविदर्शी ।

अर्थ—इस लिये आयोपायदर्शक आचार्य के चरणोंके समीप क्षपकको रहना चाहिये वहां रहनेसे ही रत्नत्रयाराधना क्षपकको प्राप्त होती है. गुणोंकी प्राप्ति और दोषोंका नाश चाहनेवाले क्षपकको अवश्य आचार्य का आश्रय करना चाहिये.

---

अवपीडकत्वं व्याख्यातुकाम' संबध्नाति पूर्वेण उपायदर्शित्वेन ।—

आलोचणगुणदोसे कोई सम्मं पि पण्णविज्जंतो ॥
तिव्वेहिं गारवादिहिं सम्मं णालोचए खवए ॥ ४७४ ॥

कश्चनाकथने दोषे दोषाणां कथने गुणे ॥
वक्रात्मा कथ्यमानेऽपि नालोचयति तत्ववित् ॥ ४८८ ॥

विजयोदया—आलोचणगुणदोसे आलोचनाया गुणदोपान्। कोई कश्चित्। सम्मंपि पण्णविज्जंतो सम्यगव-बोध्यमानोऽपि। खवगो णालोचए सम्मं क्षपक सम्यक् न कथयेत्। केन हेतुना? तिव्वेहिं गारवादिहिं तीव्रैर्गारवादिभिः आदिशब्देन लज्जाभयक्लेशासहत्त्व च गृह्यते

द्वादशभिर्गाथाभिरुत्पीडकत्वं प्रपंचयिष्यन्नायोपायवित्त्वेनास्य संबंधमभिधत्ते—

मूलारा--विपणविज्जंतो प्रज्ञाप्यमानोऽपि बोध्यमानोऽपि इत्यर्थ'। गारवादिहिं गारलज्जाभयक्लेशासहत्वैः ॥

अवपीडकत्व यह भी आचार्य का गुण है. इस गुणका आयोपायदर्शित्व गुणके साथ संबंध दिखाते हैं—

अर्थ—आलोचना करनेसे गुण और न करनेसे दोषोंकी प्राप्ति होती है यह बात अच्छी तरहसे समझाने पर भी कोई क्षपक तीव्र अभिमान, लज्जा, भय, क्लेश सहन करनेकी इच्छा न होना इत्यादि कारणोंसे अपने दोप कहनेमें उद्युक्त नहीं होता है. तव निर्यापक आचार्य मधुरभापण करके उसके लज्जादि विकार नष्ट करते हैं.

---

एवमनालोचयतोऽपि भाव प्रशांतिं नेतव्यो निर्यापकेनेत्येतद्व्याचष्टे—

णिद्धं मधुरं हिदयगमं च पल्हादणिज्जमेगंते ॥
तो पल्हावेदव्वो खवओ सो पण्णवंतेण ॥ ४७५ ॥

एकान्ते मधुरं स्निग्धं गंभीरं हृदयंगमम् ॥
स वाच्य· सूरिणा वाक्यं प्रांजलीकुर्वता मनः ॥ ४८९ ॥

विजयोदया—णिद्ध स्नेहवत्। मधुरं श्रुतिसुख। हिदयगमं हृदयानुप्रवेशि। पल्हादणिज्ज सुखदं। एगंते एकाते। पल्हावेदव्वो शिक्षयितव्य। खवगो क्षपक। सो स। आत्मापराधं यो न कथयति। पण्णवतेण प्रज्ञापयता सूरिणा। आयुष्मन्! उपलब्धसन्मार्गरत्नत्रयनिरतिचारकरणे समाहितचित्त! अतिचारं निवेदय लज्जा, भयं, गारवं च विहाय॥ गुरुजनो हि मात्रा पित्रा च सदृश, तेपा कथने का लज्जेति। स्वदोषमिव न प्रख्यापयति परेपा। यतिधर्मस्य वा अवर्ण-वादं प्रयत्नेन विनाशयितुमुद्यता'। किमयश प्रथयन्ति समीचीनदर्शनस्य। मुक्तिमार्गे प्रधानस्य मलं हि तद्यतिजनेषु निंदक। परस्य मन'सतापं दुस्सह सपादयतो असद्वेद्यकर्मबधः स्यात्। स्वय च निंद्यते वहुपु जन्म-किमर्थमय एव अयश'पकेन लिंपतीति। एवमनेकानर्थावहपरदोषप्रकटन क सचेतन' करोतीति॥ अतिचारहिमान्या हतं च रत्नत्रयकमलवन न शोभते। परनिंदा नीचैर्गोत्रस्यास्रव।

एवमनालोचयतोप्यस्य भावः प्रशान्ति नेतव्य इत्येतदाचष्टे—

मूलारा—णिद्धं स्नेहयुक्तं ममत्वगर्भमित्यर्थः। मधुरं शुचिमुखं सम्मानपेशलमित्यर्थः। हिदयंगमं हृदयानुप्रवेशि। पल्हादणिज्जं सुखदं। तो पश्चात्। पल्हावेदव्वो भावो से। संबोधनावष्टंभेन तस्य भावो मनः प्रल्हादयितव्यः प्रसत्तिं नेतव्यो निर्यापकाचार्येण। स्निग्धादिगुणं वाक्यं पण्णवंतेण प्रज्ञापयता प्रतिपादयतेति संबंध.। तथा हि—आयुष्मन्! उपलब्धसन्मार्ग रत्नत्रयनैर्मल्यकरणैकाग्रांतःकरण' लज्जां भयं गौरवं च विहाय यथाजातमतिचारं निवेदय। मातापितृकल्पस्य हि गुरूजनस्याग्रे स्वापराधं कथयता का लज्जा? न च लज्जाप्यैकांतिकी श्लाघ्यते। तथा च लोकः—

धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च ॥
आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत् ॥ इति ॥

न च मदालोचित्तं दोषमेते प्रकाशयिष्यंतीति भवता अस्माज्जनान्न भेतव्यं। धर्माचार्या हि धर्मधुराधौरेया यतीनां यतिधर्मस्य च वाच्यता निराकर्तुमुद्यताः कथमिव समाध्यर्थं उपाश्रितेन भवादृशा निवेदितं दोषं स्वस्वदोषमिव प्रकटयन्ति। सधर्मदोषप्रकटन हि मोक्षमार्गप्रधानस्य सम्यग्दर्शनस्य दूषणं परनिंदया च नीचैर्गोत्रं कर्म बध्यते। बहुषु जन्मसु निंद्यश्च भवति, बध्नाति च निंदकः परस्य दुःसहमन संतापसंपादने दुर्विपाकमसद्वेद्यं। निंद्यते च साधुजनेन स्वधर्ममाणिक्यं किमयमेवमयशःपुरीषेण लिंपतीति। तदेवमनेकानर्थमूलं परदोषोद्भावनं कः सुधीर्विदधीत। न च धर्माचार्यवर्यमन्यतया त्वया दैवात्प्रमादाद्वा यः कश्चित्सम्यक्त्वादीनामन्यतमेतिचारः प्रादुरभूत्स प्रच्छादयितुं युंज्यात्' रत्नत्रयं हि निर्मलीकृतमेव पर महिमानमावहति प्रापयति च तत्किमपि लोकोत्तरं सनातनं पदमिति ॥

यही अभिप्राय आगेकी गाथामें है.

अर्थ—यदि क्षपक अपने अपराध नहीं कहे तो निर्यापिकाचार्य क्षपकको स्नेहयुक्त, कर्णमधुर, हृदयमें प्रवेश करनेवाला, ऐसा भाषण एकांतमें कहते हैं उसकी पद्धति इस मुजब समझना—हे आयुष्मन् प्राप्त हुए रत्नत्रयमें दोष नहीं लगेंगे ऐसा तुम प्रयत्न करनेमें सदा एकाग्र चित्त रहते हो इसलिये भय, लज्जा, और गर्व छोडकर अपने दोष कहो गुरुजन तो माता पिताके समान हैं उनके समक्ष अपने दोष कहनेमें लज्जा नहीं करनी चाहिये. वे गुरुजन तुह्मारे दोष स्वदोषके समान ही समझकर दुसरोंको नहीं कहते हैं. वे तो यतिधर्ममें कोइ दोष लगावेगा तो दूर करनेके लिये हमेशा उद्युक्त रहते हैं. अतः वे तुह्मारी अकीर्ति होनेकी इच्छा क्या मनमें

धारण करेंगे? यतिजनमें दोष लगानेसे सम्यग्दर्शन जो कि मोक्षमार्गमें प्रधान माना जाता है उसमें दोष उत्पन्न होता है अतिचाररूपी वर्फ के आघात से रत्नत्रय रूपी कमलवन मुरझने लगता है. परनिंदा करनेमे नीचगोत्र कर्मका आस्रव होता है तब निंदक जन अनेक जन्ममें लोगोंमे निंदित होते हैं. दुसरेके अंतःकरण को जो संताप उत्पन्न करते हैं उनको असातावेदनीय कर्मका बंध होता है. तुम अपने धर्मको पुत्रके समान समझो और उसको अयशरूपी कीचडसे मलिन न करो. ऐसा करनेसे तुम्हारी निंदा होगी अनेक अनर्थों को उत्पन्न करनेवाले परदोषोंको कौन विद्वान प्रकट करेगा अर्थात् तुम अपने दोष हमारे सामने निःशंक होकर बोलो. हम तुह्मारे दोष किसीके सामने प्रकट नहीं करेंगे.

णिद्धं महुरं हिदयंगमं च पल्हादणिज्जमेगंते ॥
कोइ तु पण्णविज्जंतओ वि णालोचिए सम्मं ॥ ४७६ ॥

कथायामकथायां च दोषाणां गुणदोषयोः ॥
कथायामपि नो कश्चिदालोचयति वक्रधीः ॥ ४९० ॥

विजयोदया—एवं प्रज्ञापनायां सत्यामपि यो नालोचयति इत्युत्तरसूत्रार्थं ।

एवं च प्रज्ञाप्यमानोऽपि कश्चित्क्षपकः स्वदोषं सम्यग्नालोचयति विचित्रत्वात्पुरुषप्रभृतीनामित्युत्तरसूत्रावतारार्थमिदमाह—

णिद्धं मधुर हिदयंगमं च पल्हादणिज्जमेगंते ।
कोइ तु पण्णवेज्जतो वि य णालोचए सम्मं ॥

मूलारा—स्पष्टम् ।

अर्थ—स्निग्ध, कर्णमधुर, हृदयमें प्रवेश करनेवाला ऐसा भाषण बोलनेपर भी कोई क्षपक अपने दोषोंकी आलोचना करता नहीं तब—

तो उप्पीलेदव्वा खवयस्सोप्पीलएण दोसा से ॥
वामेइ मंसमुदरमवि गदं सीहो जह सियालं ॥ ४७७ ॥

दोपमुद्गाल्यते तत्स्थमुत्पीड्योत्पीडनो यतिः ॥
मांसं कंठीरवेणेव शृगालः कुर्वता भयम् ॥ ४९१ ॥

विजयोदया—तो पश्चात्। उप्पीलिदव्वा अवपीडयितव्याः। के? दोसा दोपाः। कस्य? से तस्य। खवगस्य क्षपकस्य। केन उप्पीलएण अवपीडकेन सूरिणा। अपसरासत्सकाशात्। किमस्माभिर्भवत प्रयोजन?। यो हि स्वशरीरलग्नमलप्रक्षालनेच्छः स ढौकते काचच्छायानुसारिसलिलं सरः। यो वा महारोगोरगग्रस्तस्तदपनयनाभिलापवान् स वैद्य ढौकते। एव रत्नत्रयातिचारान्निराकर्तुमभिलपता समाश्रयणीयो गुरुजनः। भवतश्च रत्नत्रयशुद्धिकरणे नैवादर किमनया क्षपकत्वविडंबनया। न चतुर्विधाहारपरित्यागमात्रायत्तसल्लेखनेय। अपि तु कपायसल्लेखनायत्ता सवरो निर्जरा च, कपाया ह्यभिनवकर्मादाने, वधे, स्थितिविधाने चोद्यताः परिहरणीयाः। तेपु कपायेपु मायातिनिकृष्टा तिर्यग्योनिनिर्वर्तनप्रवीणा। ता त्यक्तुमसमर्थस्यापि प्रविष्टस्य भवतः ससारोद्वेस्तिर्यग्भवावर्ते। ततो निःसरणमतिदुष्कर। वस्त्रमात्रपरित्यागेनैव निर्ग्रंथताभिमानोद्वहनमप्यसत्य, सत्येवं तिर्यंचोऽपि निर्ग्रंथा स्यु। चतुर्दशप्रकारस्याभ्यन्तरपरिग्रहस्य त्यागाद्भावनैर्ग्रंथ्यं समवतिष्ठते। तदेवं हि मुक्तेरुपाय। भावनैर्ग्रंथ्यस्य उपाय इति दशविधबाह्यग्रन्थत्याग उपयोगी मुमुक्षोः। न हि जीवपुद्गलद्रव्यसन्निधानमात्राधीन कर्मबंध। अपि तु तन्निमित्तजीवपरिणामालंबनः। अतिचारवति दर्शनादीनि न मुक्तेरुपाय। 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' इति किन्न भवत श्रुतिगोचरमायात जेन वच? समीचीनता हि दर्शनज्ञानचारित्राणा निरतिचारता। सा च गुरूपदिष्टप्रायश्चित्ताचरणे। गुरवोऽपि कृतालोचनायैव प्रायश्चित्तं प्रयच्छन्ति। ततो भवान्दूरभव्यः अभव्यो वा। आसन्नभव्यत्वे सति किमेवं महामायाशल्यं भवति?। नैव यतिजनवंदनार्होऽसि। 'समणं वदेज्ज मेधावी संजद सुसमाहिद' इति वचनात्। जीवितमरणयोर्लाभालाभयोर्निंदाप्रशसयोश्च समानचित्ततया समानो भवति। आतिचारनिवेदने मा निंदति न प्रशंसतीति भवता नालोच्यते। तत्कथ समानोऽसि? कथ वा वंद्य?

सीहो जह सियालं उदरमवि गदं पि मंस वामेदि सिंहो यथा शृगालमुदरप्रविष्टमपि मासमुद्गारयति तद्वन्मायाशल्यमन्तर्लीन निस्सारयत्यवपीडकः ॥

सामप्रयोगेण सम्यगालोचयति च क्षपके दंडभेदौ प्रयोक्तव्यावित्युपदेष्टुं सदृष्टान्तमाचष्टे—

मूलारा—तो सामप्रयोगानंतरं। उप्पीलेदव्वा उत्पीडयितव्याः। उद्गारणीया अंतर्निगूढास्तन्मुखेन निःसारणीया इत्यर्थः। तथा हि अहो स्वापराधास्फुटवादिन् अपसरासमत्सकाशात्। भिपग्भिरिव निर्व्याधेः किमस्माभिर्भवतः प्रयोजनं। रत्नत्रयातिचारान्निराकर्तुमिच्छता हि गुरवः समाश्रयणीयाः। भवतश्च रत्नत्रयशुद्धिकरणे नास्त्यादरः। तत्किमनया क्षपकत्वविडम्बनया? न हि चतुर्विधाहारपरिहारमात्रायत्ता सल्लेखनेयमपि तु कपायसल्लेखनायत्ता। तद्वत्संवरो

निर्जरा च । कपाया ह्यभिनवकर्मादाने तत्स्थितिविधाने च समुद्यता मुमुक्षुभिरपक्षेप्या । तेपु च माया नियतमा तिर्यग्योनिपरिवर्तनप्रवधनत्वात् । माया च त्यक्तुमसमर्थोऽसि त्वं । प्रविष्टस्य च तिर्यग्भवावर्ते संसारवारणारंभवतस्ते निःसरण मतिदुष्करं । वस्त्रमात्रपरित्यागेनैव निर्ग्रंथताभिमानोद्वहनं च न न्याय्यं । एवं सति हि तिर्यंचोऽपि निर्ग्रंथाः स्युः । चतुर्दशाभ्यान्तरग्रंथग्रंथिनिर्मथन हि भावनैर्ग्रंथ्यमनुशासति धर्मतीर्थप्रणेतारस्तदेव च मुक्ते' सत्य उपायः । दशविधबाह्यग्रंथत्यागस्तु भावनैर्ग्रंथ्यसिद्ध्यंगत्वे नैवोपयोगी मुमुक्षोः । न खलु जीवपुद्गलद्रव्यमात्रप्रत्यासत्तिमात्रः कर्मबंध । किं तर्हि तन्निमित्तकजीवपरिणामकारणकः । न चातिचारवन्ति सम्यक्त्वादीनि मुक्तेरुपायः । सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग इति जैनं वचः किं न भवतः श्रुतिगोचरतामवातरत् । तत्र च समीचीनता दर्शनादीना निरतिचारता व्याचक्षते । सा च गुरूपदिष्टप्रायश्चित्ताचरणेनैव संपाद्या । गुरवश्च कृतालोचनायैव प्रायश्चित्तं प्रयच्छन्ति । ततो भवान्दूरभव्योऽभव्य एव वा, कथमन्यथैवं महन्मायाशल्यं अन्तर्वहति । कथं चैवं यतिजनवंदनामर्हसि । 'समणं वंदिज्ज मेधावी संजदं सुसमाहिदं' इति वचनात् । जीवितमरणयोर्लाभालाभयोर्निंदाप्रशंसयोश्च समानचित्ततया समानोऽनुमन्यते । अतीचारालोचने मा निंदंति न प्रशंसंतीति भवता नालोच्यते तत्कथं समानोऽसि, कथं वा वंद्यः? किं च मद्दोषं न कश्चिल्लोके जानाति किं त्वहमेवैको जानामीति मा मंस्थाः । यतोऽत्र यदा यो दोपो मूलोत्तरगुणादिगोचरी भवता कृतस्तमहं जानाम्यन्येऽपि यतयश्चेति । वामेदीत्यादि । सिंहो यथा शृगालमुदरप्रविष्टमपि मांसमुद्गालयत्येवं मायाशल्यं क्षपकस्यान्तर्लीनं नि सारयत्युत्पीडक इति तात्पर्यं ।

अर्थ--अवपीडगुणधारक आचार्य क्षपकके दोषोंको जबरी से वाहर निकालते हैं जैसे सिंह सियालके पेटमें भी चला गया मांस वमन करवाता है तैसे तेजस्वी अवपीडक गुणके धारक आचार्य क्षपकके दोष सब वाहर निकालते हैं वे उसको इस तरह भापण करते हैं–हे मुने ! तुम हमारे पास मत रहो यहांसे हट जाओ. हमसे क्या तुह्मारा प्रयोजन है? जिसको अपने शरीरका मल धो डालनेकी इच्छा है वह पुरुप कांचके समान सुंदर स्वच्छ पानी जिसमें है ऐसे सरोवरमें जाता है. जो पुरुप महारोग से पीडित है वह उसका नाश करनेकेलिये वैद्यको शरण जाता है. वैसे जिसको अपने रत्नत्रयमें लगे हुए दोप दूर करनेकी इच्छा है वह पुरुप गुरूओंका आश्रय करता है. परन्तु तुमको तो रत्नत्रयको निर्मल करनेकी इच्छा है ही नहीं अतः यह क्षपकका वप व्यर्थ क्यों धारण किया है. चार प्रकारके आहारका त्याग करने मात्रसे सल्लेखना नहीं होती है. परन्तु कषायोंका त्याग करनेसे सल्लेखना

होती है. इस सल्लेखनासे ही संवर निर्जरा होते हैं. कषायोंसे नवीन कर्मोंका ग्रहण होता है, बंध होता है, और स्थिति होती है. अतः इनको आत्मासे हटाना चाहिये सब कषायोंमें माया बडी खराब है. यह प्राणिओको तिर्यग्योनीकी प्राप्ति करा देती है ' माया तैर्यग्योनस्य ' ऐसा तत्वार्थशास्त्र में उल्लेख है. यदि तुम इस मायाका त्याग न करेंगे तो इस भवसमुद्रमें तिर्यग्गतिके भोवरेमें पडकर खूब भ्रमण करोगे. फिर वहांसे छूटना बडा ही कठिन हो जायगा. केवल वस्त्रमात्रका त्याग करनेसे तुम अपनेको निर्ग्रंथ मुनि समझ रहे हो परंतु याद रखो कि केवल वस्त्रके त्यागसे निर्ग्रंथता की प्राप्ति नहीं होती है क्योकि पशु भी निर्वस्त्र अर्थात् नग्न रहते हैं. उनको भी निर्ग्रंथ मानना पडेगा मिथ्यात्व, क्रोधादिक चार कषाय, और हास्य, रति, अरति, शोक भय, जुगुप्सा, स्त्रीवेद, पुरुषवेद, नपुंसकवेद, ऐसे चौदा अभ्यंतर परिग्रहोंका त्याग करनेसे भावनिर्ग्रंथताकी प्राप्ति होती है. यही मोक्षलाभके लिये उपाय है. अभ्यंतर परिग्रहका त्याग बाह्य परिग्रहत्यागके लिये उपयोगी है.

केवल जीव और पुद्गलोंका सान्निध्य होनेसे कर्मबंध नहीं होता है. परंतु कर्मबंधनके लिये योग्य जीवपरिणामही उसके आधार हैं अतिचारयुक्त सम्यग्दर्शनादिक जीवको मोक्षकी प्राप्ति कर देनेमें समर्थ नहीं है. 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' अर्थात् रत्नत्रयकी पूर्णता होना मुक्तिप्राप्तिका उपाय है क्या यह जिनेश्वरका वचन तुमने नहीं सुना है ? ज्ञान दर्शन और चारित्रका उत्तम पालन करनेसे ही निरतिचारपना प्राप्त होता है. गुरुओंने कहे हुए प्रायश्चित्तका पालन करनेसे वह निरतिचारपना प्राप्त होता है. गुरु भी जिन्होंने अपने दोषोंकी आलोचना की है उनकोही प्रायश्चित्त देते हैं. तुम तो दूर भव्य अथवा अभव्य हो ऐसा हम समझते हैं. यदि तुम आसन्नभव्य होते तो तुमारेमें यह बडा मायाशल्य क्यों रहता ? तुम मुनिजनकेलिये वंदनीय नहीं है. समण वंदेज्ज मेधावी संजदं सुसमाहितं, अर्थात् जीवित और मरण, लाभ और अलाभ निंदा और प्रशंसामें जिसका मन समान रहता है वही समान कहा जाता है. अतिचारका निरूपण करने पर मेरी निंदा करेंगे प्रशंसा न करेंगे ऐसा तुम मनमें विचार कर रहे हो इस लिये तुमको समान मानना व्यर्थ है. इस वास्ते तुम वंद्य नहीं है. ऐसा भाषण करके अवपीडक आचार्य क्षपकके सब व्रताद्यतिचार बाहर निकलवाते हैं. उसके हृदयमें जो मायाशल्य वैठा था उसको बाहर निकालवाते हैं.

---

इत्थंगवपीडको भवतीत्याचष्टे—

उज्जस्सी तेजस्सी वच्चस्सी पहिदकित्तियायरिओ ॥
सीहाणुओ य भणिओ जिणेहिं उप्पीलगो णाम ॥ ४७८ ॥

कंठीरव इवौजस्वी तेजस्वी भानुमानिव ॥
चक्रवर्तीव वर्चस्वी सूरिरुत्पीडकोऽकथि ॥ ४९२ ॥

स तर्हि कीदृगुत्पीडको भवति इति प्रश्ने सत्याह—

मूलारा—ओजस्सी बलवान् । तेजस्सी प्रतापवान् यतः सर्वोऽपि निभेति परैः स्वैश्चाधृष्य इत्यर्थः । वच्चस्सी प्रश्नोत्तरदानकुशलः । सीहाणुगो सिंहसमानः अक्षोभ इत्यर्थः ॥

अवपीडक आचार्यका लक्षण आचार्य कहते हैं—

अर्थ—उत्पीलक गुणधारक आचार्य ओजस्वी, बलवान् और तेजस्वी प्रतापवान् होते हैं. अर्थात् उनसे स्वसंघके मुनि और परसंघके भी-भययुक्त होते हैं अर्थात् सर्व मुनिओंपर वे अपना रोब जमानेवाले होते हैं. स्वसंघ और परसंघके मुनि उनकी आज्ञा नहीं उल्लंघते हैं वे वचस्वी अर्थात् प्रश्नका उत्तर देनेमें कुशल होते हैं. उनकी कीर्ति चारो दिशाओंमें रहती है वे सिंह समान अक्षोभ्य रहते हैं वे किसीको डरते नहीं है.

---

विजयोदया—यो यद्धितकामस्स त बलात्तत्र प्रवर्तयति । यथा हिता माता बाल घृतपाने । इत्येतदुत्तरसूत्रेणाचष्टे—

पिल्लेदूण रडंत पि जहा बालस्स मुहं विदारित्ता ॥
पज्जेइ घदं माया तस्सेव हिदं विचिंतंती ॥ ४७९ ॥

यथावष्टभ्य हस्ताभ्यां विदार्य वदनं घृतं ॥
बालं पाययते माता रटंतं हितकारिणी ॥ ४९३ ॥

विजयोदया—पिल्लेदूण मुह विदारित्ता घदं पज्जेदि यथा जननी बालहितचिंतोद्यता पूत्कुर्वन्तमपि वा ल अवष्टभ्य मुखं विदार्य घृत पाययति । दार्ष्टान्तिकेन योजयति ॥

यो यद्धितमिच्छति स तं बलादपि तत्र प्रवर्तयति यथा माता बालं घृतपाने इति समर्थयितुं गाथाद्वयमाह—

मूलारा—पेल्लेदूण हस्ताभ्यामवष्टभ्य । रडतंपि पूत्कुर्वन्तमपि । पायेदि पाययति ॥

जो जिसका हित करना चाहता है वह उसको हितके कार्यमें बलात्कारसे प्रवृत्त करता है. जैसे हित करनेवाली माता अपने बालकको घृत पिलानेमें प्रवृत्त होती हैं

यह अभिप्राय आगेके सूत्रमें आचार्य कहते हैं.

अर्थ—जैसे बालकको हित करनेवाली माता बालक रोता है तो भी उसको पकडकर और उसका मुख बलात्कारसे उघाडकर उसको घृत पिलाती है. उत्पीडक आचार्य भी वैसी ही प्रवृत्ति करते हैं. यह बात आगेकी गाथामें आचार्य प्रकट करते हैं—

---

तह आयरिओ वि अणुज्जयस्स खवयस्स दोसणीहरणं ॥
कुणदि हिदं से पच्छा होहिदि कडु ओसहं वत्ति ॥ ४८० ॥

अवपीड्य तथोत्पीडी हितारोपपरायणः ॥
अनृजुं क्षपकं सूरिर्दोषं त्याजयतेऽखिलम् ॥ ४९४ ॥

विजयोदया—तह तथा । आयरिओ आचार्योऽपि । अणुज्जयस्स खवगस्स अनृजो क्षपकस्य । दोसणीहरणं कुणइ मायाशल्यनिरासं करोति । कडुगोसधं वत्ति कटुकमौषधमिव। से तस्य । पच्छाहिदं होदि पश्चाद्धितं भवतीति ॥

दृष्टान्तं प्रदर्श्य दार्ष्टांतिकेन योजयन्नाह—

मूलारा—अणुज्जगस्स अनृजोः । दोसणीहरण । मायाशल्यनिरासं । कडुगोसहं वत्ति कटुकौषधमिवेति ॥

अर्थ—आचार्य भी मायाचार धारण करनेवाले क्षपकको जबरदस्ती मे दोषोंकी आलोचना करनेमें बाध्य करते हैं तब वह दोष कहता है कडु औषधि जैसे रोगीमनुष्य का सेवन करनेके नंतर कल्याण करती है वैसे दोषोंकी आलोचना करनेसे क्षपकका कल्याण होना है अर्थात् आलोचनासे भविष्यत्कालीन संसारपरिभ्रमणसे वह मुक्त होता है

---

यो न निर्भर्त्सयति दोषं दृष्ट्वापि प्रियमेव वक्ति स गुरु. शोभन इति न भवद्भिर्मंतव्यमित्युपदिशति—

जिब्भाए वि लिहंतो ण भद्दओ जत्थ सारणा णत्थि ॥
पाएण वि ताडिंतो स भद्दओ जत्थ सारणा अत्थि ॥ ४८१ ॥

भद्र· सारणया हीनो न लिहन्नपि जिह्वया ॥
ताडयन्नपि पादेन भद्रः सारणया युतः ॥ ४९५ ॥

विजयोदया—जिब्भाए वि लिहतो जिह्वया स्वादयन्नपि न भद्दगो नैव भद्रक । जत्थ सारणा णत्थि। यस्मिन्गुरौ दोषनिवारणा नास्ति । पाएण वि ताडेंतो पादेन ताडयन्नपि स भद्दगो स सूरिर्भद्रक । सारणा जत्थ अत्थि सारणा गुरौ यत्र विद्यते ॥

दोषं दृष्ट्वापि त्वा न निर्भर्त्सयति अपि तु प्रियमेव ब्रवीति स गुरुः शोभन इति त्वया न मंतव्य इत्युपदिशति—

मूलारा—लिहन्तो स्वादयन् प्रियवचनादिभि सुखयन्नपीत्यर्थ· । सारणा दोषनिवारणा गुणप्रवर्तनं वा ।

जो शिष्योंके दोष देखकर भी प्रिय ही बोलता है निर्भर्त्सना करता नहीं है वह गुरु उत्तम है ऐसा हे मुने ! तुम मनमें मत समझो ऐसा आचार्य उपदेश करते है—

अर्थ—जो गुरु शिष्योंको दोषोंसे निवारण नहीं करते हैं वे जिव्हासे मधुर भाषण बोले तो भी वे शिष्योंका अकल्याणही करनेवाले मानना चाहिये जो गुरु लातोंसे शिष्योंका समाचार लेता है परंतु जो दोषोंसे शिष्योंको अलिप्त रखता है वही गुरु हित करनेवाला समझना चाहिये

---

सारणकस्य सूरेर्भद्रताप्रकटनाय गाथा—

सुलहा लोए आदट्ठचिंतगा परहिदम्मि मुक्कधुरा ॥
आदट्ठं व परट्ठं चिंतंता दुल्लहा लोए ॥ ४८२ ॥

परकार्यपराचीनाः सुलभाः स्वार्थकारिण· ॥
आत्मार्थमिव कुर्वाणाः परार्थमपि दुर्लभा· ॥ ४९६ ॥

विजयोदया—सुलभा लोए आदट्ठचिंतगा सुलभा प्रचुरा । लोए लोके । आदट्ठचिंतगा स्वकार्यं तत्परा । परहिदम्मि मुक्कधुरा पराहितकरणे अलसा· । आदट्ठ व आत्मप्रयोजनमिव । परट्ठं चिंतता परप्रयोजनचिंतासमुद्यता. लोके दुर्लभा. ॥

सारकत्वसूरिदुर्लभत्वख्यापनार्थमाह—

मूलारा—सुलभाः प्रचुराः । आदट्ठचिंतया स्वकार्यचिंतनपराः। मुक्कधुरा अलसाः आदट्ठंव स्वकार्यमिव ॥

दोषोंसे निवारण करनेवाले आचार्यकी भद्रता प्रकट करते हैं—

अर्थ—इस जगतमें अपने कार्यमें ही तत्पर रहनेवाले और परहित करनेके कार्यमें अलसी ऐसे ही लोक वहुत हैं अपने हितके समान परहितकी चिन्ता करनेवाले लोक अतिशय विरल हैं.

---

आदट्ठमेव चिंतेदुमुट्ठिदा जे परट्ठमवि लोगे ॥
कडुय फरुसेहिं साहेंति ते हु अदिदुल्लहा लोए ॥ ४८३ ॥

ये स्वार्थं कर्तुमुद्युक्ताः परार्थमपि कुर्वते ॥
कटुकैः परुपैर्वाक्यैस्ते तरां सन्ति दुर्लभाः ॥ ४९७ ॥

विजयोदया—आदट्ठमेव चिंतेदुमुट्ठिदा आत्मीयमेव प्रयोजनं चिंतयितुमुत्थिता । जे ये। परट्ठमवि परप्रयोजनमपि कडुगफरुसेहिं कटुकैः परुषैः प्रवचनैः । साधेंति साधयन्ति लोके। अतिदुल्लहा अतीव दुर्लभा ॥

अमार्गनिवारकाणामतिदुर्लभत्वमाह—

मूलारा—उट्ठिदा उद्युक्ताः । कडुगफरुसेहिं कटुकपरुपैर्वचनैश्चेष्टितैश्च दोषान्निवर्तयितुं प्रयुक्तैः । साधेंति ज्ञापयन्ति निष्पादयन्ति वा ।

अर्थ—जो पुरुष आत्महित करनेके लिये कटिवद्ध होकर आत्माहितके साथ कडु और कठोर वचन वोल-कर परहित भी साधते हैं वे जगतमें अतिशय दुर्लभ समझने चाहिये.

---

सूरिर्यदि नावपीडयेत् नासौ क्षपको मायाशल्यान्निवर्तेत । निर्मायत्वे निरतिचाररत्नत्रये च गुणे न प्रवर्तेत इति आचार्यसपाद्यमुपकारं प्रकटीकरोति—

खवयस्स जइ ण दोसे उग्गालेइ सुहमेव इदरे वा ॥
ण णियत्तइ सो तत्तो खवओ ण गुणे य परिणमइ ॥ ४८४ ॥

एवं अवपीडकतां व्याख्यायावसरप्राप्तामपरिस्राविता व्याचष्टे—

लोहेण पीदमुदयं व जस्स आलोचिदा अदीचारा ॥
ण परिस्सवंति अण्णत्तो सो अप्परिस्सवो होदि ॥ ४८६ ॥

**दोषो निवेशितो यत्र तप्ते तोयमिवायसि ॥**
**न निर्याति महासारे स ज्ञातव्योऽपरिस्रवः ॥ ५०० ॥**

विजयोदया—लोहेण पीदमुदग व एवमत्र पदसंबंध । जस्स आलोइदा दोसा ण परिस्सवति अण्णत्तो यस्मै कथिता दोषा न परिस्रवन्त्यन्यत' । किमिव लोहेण पीदमुदगव लोहेन सततेन पीतमिवोदक । सो सः । एवभूतोऽपरिस्सवो होदि अपरिस्रावी भवति ॥

अपरिस्राविता दशभिर्गाथाभिर्व्याकर्तुकामः पूर्वं तल्लक्षणार्थमिदमाह—

मूलारा—लोहेण अर्थात् संतप्तेन । पीदं पीतमन्तर्नीतं । ण परिस्सवंति । न प्रकटा भवन्ति । अण्णत्तो अन्यत अन्यत्रेति यावत् । उक्तं च—

दोषो निवेशितो यत्र तप्ते तोयमिवायसि ॥
न निर्याति महासारे स ज्ञातव्योऽपरिस्रवः ॥

इस प्रकार अवपीडक गुणका वर्णन हुआ. अव अपरिस्राविता गुणका वर्णन करते हैं—

अर्थ—जैसे तपा हुआ लोहका गोला चारो तरफसे पानीका शोषण कर लेता है और वह शोषण किया गया पानी उससे बाहर निकलता नहीं वैसे क्षपकके दोष जो आचार्य सुनकर अपने मनमें ही रखते हैं अन्य जनों को इस क्षपकने ऐसे ऐसे अपराध किये थे ऐसा नहीं कहते हैं वे आचार्य अपरिस्रावी गुणके धारक हैं ऐसा समझना चाहिये.

---

दंसणणाणदिचारे वदादिचारे तवादिचारे य ॥
देसच्चाए विविधे सव्वच्चाए य आवण्णो ॥ ४८७ ॥

**अतिचारास्तपोवृत्तज्ञानसम्यक्त्वगोचराः ॥**
**मनोवाक्काययोगेन जायंते त्रिविधा यतेः ॥ ५०१ ॥**

सारकत्वसूरिदुर्लभत्वख्यापनार्थमाह—

मूलारा—सुलभा· प्रचुराः । आदट्ठचिंतया स्वकार्यचिंतनपराः । मुक्कधुरा अलसाः आदट्ठंव स्वकार्यमिव ॥

दोषोंसे निवारण करनेवाले आचार्यकी भद्रता प्रकट करते हैं—

अर्थ—इस जगतमें अपने कार्यमें ही तत्पर रहनेवाले और परहित करनेके कार्यमें अलमी ऐसे ही लोक बहुत हैं अपने हितके समान परहितकी चिन्ता करनेवाले लोक अतिशय विरल हैं.

---

आदट्ठमेव चिंतेदुमुट्ठिदा जे परट्ठमवि लोगे ॥
कडुय फरुसेहिं साहेंति ते हु अदिदुल्लहा लोए ॥ ४८३ ॥
ये स्वार्थं कर्तुमुद्युक्ता· परार्थमपि कुर्वते ॥
कटुकैः परुषैर्वाक्यैस्ते तरां सन्ति दुर्लभाः ॥ ४९७ ॥

विजयोदया—आदट्ठमेव चिंतेदुमुट्ठिदा आत्मीयमेव प्रयोजनं चिंतयितुमुत्थिता । जे ये । परट्ठमवि परप्रयोजनमपि कडुगफरुसेहिं कटुकै· परुषै· प्रवचनै· । साधेंति साधयन्ति लोके । अतिदुल्लहा अतीव दुर्लभा ॥

अमार्गनिवारकाणामतिदुर्लभत्वमाह—

मूलारा—उट्ठिदा उद्युक्ताः । कडुगफरुसेहिं कटुकपरुषैर्वचनैश्चेष्टितैश्च दोषान्निवर्तयितुं प्रयुक्तै· । साधेंति ज्ञापयन्ति निष्पादयन्ति वा ।

अर्थ—जो पुरुष आत्महित करनेके लिये कटिबद्ध होकर आत्महितके साथ कडु और कठोर वचन बोल-कर परहित भी साधते हैं वे जगतमें अतिशय दुर्लभ समझने चाहिये.

---

सूरिर्यदि नावपीडयेत् नासौ क्षपको मायाशल्यान्निवर्तेत । निर्मायत्वे निरतिचाररत्नत्रये च गुणे न प्रवर्तेत इति आचार्यसपायमुपकार प्रकटीकरोति—

खवयस्स जइ ण दोसे उग्गालेइ सुहमेव इदरे वा ॥
ण णियत्तइ सो तत्तो खवओ ण गुणे य परिणमइ ॥ ४८४ ॥

विजयोदया—दंसणणाणादिचारे य धदादिचारे श्रद्धानस्यातिचार शंकाकाक्षाविचिकित्सान्यदृष्टिप्रशसासंस्तवा। ज्ञानस्य अतिचारा' अकाले पठन, श्रुतस्य श्रुतधरस्य वा विनयाकरणं अनुयोगादीना ग्रहणे तत्प्रायोग्यावग्रहणं, उपाध्याय निह्नवः, व्यजनाना न्यूनताकरण, आधिक्यकरण । अर्थस्य अन्यथाकथन वा । तपसोऽनशनादेरतिचार । स्वयं न भुक्ते। अन्यं भोजयति, परस्य भोजनमनुजानाति मनसा वचसा कायेन च । स्वय क्षुधा पीडित आहारमभिलपति। मनसा पारणा मम कः प्रयच्छति, क्व वा लप्स्यामीति चिंता अनशनातिचार' । रसवदाहारमतरेण परिश्रमो मम नापैति इति वा । पड्जीवनिकायवाधाया अन्यतमेन योगेन वृत्तिः। प्रचुरनिद्रतया सक्लेशकमनर्थमिदमनुष्ठित मया, संतापकारीदं नाचरिष्यामि इति सकल्प अवमोदर्यातिचार । मनसा बहुभोजनादर' । परं बहु भोजयामीति चिंता। भुक्ष्व यावद्भवत-स्तृप्तिरिति वचन, भुक्त मया यद्वित्युक्ते सम्यक्कृतमिति वा वचन, हस्तसज्ञया प्रदर्शन कठदेशमुपस्पृश्य वृत्तिपरिसख्या नस्यातिचारा.। गृहसप्तकमेव प्रविशामि, एकमेव पाटक दरिद्रगृहमेक। एवभूतेन दायकेन दायिकया वा दत्त ग्रहीष्यामीति वा कृतसकल्प.। गृहसप्तकादिकादधिकप्रवेश', पाटातरप्रवेशश्च। पर भोजयामीत्यादिक' । कृतरसपरित्यागस्य रसाति-सक्तिः, परस्य वा रसवदाहारभोजन, रसवदाहारभोजनानुमननं, वातिचार.। कायक्लेशस्यातपनस्यातिचार' उष्णार्दितस्य शीतलद्रव्यसमागमेच्छा,सतापापायो मम कथ स्यादिति चिंता, पूर्वानुभूतशीतलद्रव्यप्रदेशाना स्मरण, कठोरातपस्य द्वेप', शीतलादेशादकृतगात्रप्रमार्जनस्य आतपप्रवेशः। आतपसंतप्तशरीरस्य वा अप्रमृष्टगात्रस्य छायानुप्रवेश इत्यादिक, । वृक्षस्य मूलमुपगतस्यापि हस्तेन, पादेन, शरीरेण वाप्कायाना पीडा। कथं ? शरीरावलग्नजलकणप्रमार्जनं, हस्तेन पादेन वा शिलाफलकादिगतोदकापनयनं । मृत्तिकार्द्राया भूमौ शयनं । निम्नेन जलप्रवाहगमनदेशे वा अवस्थानम् । अयग्राहे वर्षापात कदा स्यादिति चिंता। वर्षति देवे कदास्योपरमः स्यादिति वा । छत्रकटकादिधारण वर्षानिवारणायेत्यादिकः। तथा अभ्रावकाशस्यातिचारः । सचित्ताया भूमौ त्रससहितहरितसमुत्थिताया विवरवत्या शयनं । अकृतभूमिशरीरप्रमा र्जनस्य हस्तपादसकोचप्रसारणं, पार्श्वान्तरसचरणं, कण्डूयनं वा । हिमसमीरणाभ्या हतस्य कदैतदुपशमो भवतीति चिंता, वशदलादिभिरुपरिनिपतिताहिमापकर्षणं, अवश्यायघट्टना वा। प्रचुरवातापातदेशोऽयमिति संक्लेश' । अग्निप्रावरणादीनां स्मरणमित्यादिक.। प्रायश्चित्तातिचारनिरूपणा—तत्रातिचारा । आकंपिय अणुमाणियमित्यादिकाश्च। भूतातिचारेऽस्य मनसा अजुगुप्सा । अज्ञानतः, प्रमादात्कर्मगुरुत्वादालस्याद्वेदं अशुभकर्मबंधननिमित्तं अनुष्ठित, दुष्टं कृतमिति एवमादिक. प्रतिक्रमणातिचार । उभयातिचारसमवायस्तदुभयातिचार' । भावतोऽविवेको विवेकातिचारः । व्यु-त्सर्गातिचार । कुतो भवति शरीरममतायामनिवृत्तिः । अशुभध्यानपरिणति' । कायोत्सर्गदोषाश्च तप अतिचारे उक्ता । एव छेदस्यातिचार' न्यूनो जातोऽहमिति सक्लेशः, भावतो रत्नत्रयानादान मूलातिचार सर्वो द्विप्रकार इत्यादावेद्दे-देशयाए विविधे देशातिचार नानाप्रकारं मनोवाक्कायभेदात्कृतकारितानुमतविकल्पाश्च । सव्वचागे य सर्वातिचारे च आपन्नो आपन्न ॥

सम्यक्त्वाद्यतिचारान्विचित्रानस्याचार्याणां विश्वस्तो भिक्षुरालोचयति तत्र परिस्रावी यदि सूरिः स्यात्तदा बहून् दोषान्प्राप्नोति इति वक्तुं गाथात्रयमाह—

मूलारा— देसच्चाए दर्शनादीनामेकदेशभंगे सति । विविहे मनोवाक्कायै· प्रत्येकं कृतकारितानुमननै-र्नानात्वं गतान् । सव्वच्चाए सर्वात्मना दर्शनादीना भंगे । आवण्णो दर्शनाद्यतिचारान्विविधान्प्राप्तो भिक्षु कथयति स्व दोपानिति उत्तरार्द्धेन संवंध । अन्ये पुनरेवं संवध्नन्ति । दर्शनादीनामतिचारे विविधे आवण्णे प्राप्ते सति । भिक्षु स्वदोपान्कथयति । तत्र दर्शनातिचारा· शंकादयः प्रागुक्ता । ज्ञानातिचारास्तु विनयविपर्ययरूपा अकालपठनादय. संशयविपर्ययौ वा । अहिंसादिव्रताना वाङ्मनोगुप्तीर्यादाननिक्षेपणसमित्यालोकितपानभोजनानि पंचेत्योदि तत्वार्थोक्त भावनाहानयः । तपस्यनशनादौ सापेक्षस्य तदंशभंजनमातिचार· ॥ तत्रानशनस्य परं मनसा, वाचा, कायेन वा भोजयतो भुंजानं वा अनुमन्यमानस्य स्वयं वा क्षुत्क्षामतयाहारमभिलपतोऽतिचार स्यात् । मनसा को मे पारणा प्रदास्यति, क वा लप्स्ये इति चिंता वा सुरसाहारमंतरेण परिश्रमो मम नापैति इति वा । पड्जीवनिकायवाधाया अन्यतमेन योगेन वृत्तिर्वा प्रचुरनिद्रतया संक्लेशो वा । किमर्थमिदमनुष्ठितं मया संतापकारि पुनरिदं नाचरिष्यामि इति संक्लेशो वेति ।

२ अवमोदर्यस्यातिचारो मनसा वहुभोजनादरः । परं वहु भोजयामीति चिंता, भुंक्ष्व यावद्भवतस्तृप्तिरिति वचनं । भुक्तं मया वह्वित्युक्ते साधु कृतमिति वा वचनं । हस्तसंज्ञया वा प्रदर्शनं कठदेशमुपस्पृश्येति ।

३ वृत्तिपरिसख्यानस्यातिचारो गृहसप्तकमेव प्रविशामि इत्येवमादिसंकल्पं कृतवतः परं भोजयामीत्यभिप्रायेण तदधिकप्रवेशादिकः ॥

४ रसपरित्यागस्य रसातिसाक्तिं परस्य वा रसवदाहारभोजनाद्भोजनानुमननं चेति ।

५ विविक्तशय्यासनस्य पूर्वोक्तलक्षणहीनवसतौ शयनासनं यथोक्तलक्षणवसतावरतिर्वेत्यादिकः ॥

६ कायक्लेशस्यातापनस्यातिचार उष्णार्दितस्य शीतलद्रव्यसमागमेच्छा, संतापापायो मम कथं स्यादिति चिंता, पूर्वानुभूतशीतलद्रव्यप्रदेशाना स्मरणं, कठोरातपद्वेप·, शीतलदेशादकृतगात्रप्रमार्जनस्यातपप्रवेश· । आतापसंतप्ता-प्रमृष्टगात्रस्य छायानुप्रवेश इत्यादिकः । वृक्षमूलाधिवासस्य हस्तेन पादेन वा शरीरावलग्नजलकणप्रमार्जन । तद्वच्छिलाफलकादिगतोदकापनयनं, जलार्द्रायां भूमौ शयनं, निम्नजलप्रवाहगमनदेशे वा अवस्थानं, अवग्रहे वृष्टि· कदा स्यादिति चिंता, वृष्टौ वा कदैतदुपरम स्यादिति वा, वृष्टिप्रतिवंधाय छत्रादिधारणं वेत्यादि· । अभ्रावकाशस्य हिमवाताभ्यामुपहतस्य कदैतदुपशम· स्यादिति चिंता, वंशदलादिभिरुपरिनिपतितहिमस्यापकर्पणमवश्यायघट्टना वा, प्रभूतवातातपदेशोऽयमिति संक्लेशोऽग्निप्रावरणादीना स्मरणमित्यादिक. ।

निवर्तनं न दोषेभ्यो न गुणेषु प्रवर्तनम् ॥
विभस्ते क्षपकः सर्वदोषमत्याजितो यतः ॥ ४९८ ॥

विजयोदया—क्षपकस्स जइ ण सुहुमे व थूरे वा दोसे ण उग्गालेइ क्षपकस्य सूक्ष्मान् स्थूलान्वा दोषान् यदि नोद्गालयति । सो क्षपको तत्तो ण णियत्तइ स क्षपकस्तेभ्यः सूक्ष्मेभ्यः स्थूलेभ्यो वा दोषेभ्यो न निवर्तेत । नैव गुणे प्रवर्तेत । निरस्तदोषो गुणे प्रवर्तितो कथमाराधकः स्यादाराधनार्थमायातोऽप्यसत्यवपीडके ॥ उप्पीलत्ति गदं ।

सूरेरुत्पीडकत्वाभावे क्षपकस्यापकारमाह—

मूलारा—तत्तो स्थूलसूक्ष्मदोषेभ्यः । निर्मायत्वे निरतिचाररत्नत्रये च ॥

आचार्य यदि कठोर और कटु शब्द बोलकर क्षपकको व्यथित नहीं करेंगे तो वह मायाशल्यसे परावृत्त नहीं होगा, निष्कपटपना और निरतिचाररत्नत्रय पालन करना इन गुणोंमें उसकी प्रवृत्ति न होगी, परंतु क्षपकको आचार्य दोषोंसे परावृत्त करते हैं; यह उनका महान् उपकार है यही विषय आगेकी गाथामें प्रगट करते हैं—

अर्थ—यदि आचार्य क्षपकके सूक्ष्म अथवा स्थूल दोष उसके हृदयसे बाहर निकालनेका प्रयत्न नहीं करते तो वह क्षपक गुणोंमें कभी प्रवृत्त नहीं होता दोषोंका नाशकर यदि वह गुणमें प्रवृत्त न होगा तो वह आराधक कैसा होगा ? इस वास्ते आचार्यमें अवपीडक गुण होना ही चाहिये, आचार्य इस गुणके धारक न हो तो आराधनार्थ आया हुआ क्षपक आराधक न होगा.

तम्हा गणिणा उप्पीलएण खवयस्स सव्वदो साहु ॥
ते उग्गालेदव्वा तस्सेव हिदं तहा चेव ॥ ४८५ ॥

नित्योत्पीडी पीडयित्वा समस्तांस्तस्माद्दोषांस्त्याजयेत्तं हितार्थी ॥
दृग्गाभिभ्रंसं किं विभस्ते न वैद्यः तन्वन्बाधां व्याधितस्येष्टकारी ॥ ४९९ ॥
इति उत्पीडी ।

उपसंहारमाह—

मूलारा—सव्वदो सर्वतः । उत्पीडकः ॥

अर्थ—इस लिये उत्पीडक आचार्यको क्षपकका हित करनेके लिये उसके सब दोष निकालना योग्य है

एवं अवपीडकतां व्याख्यायावसरप्राप्तामपरिस्रावितां व्याचष्टे—

लोहेण पीदमुदयं व जस्स आलोचिदा अदीचारा ॥
ण परिस्सवंति अण्णत्तो सो अप्परिस्सवो होदि ॥ ४८६ ॥

दोषो निवेशितो यत्र तप्ते तोयमिवायसि ॥
न निर्याति महासारे स ज्ञातव्योऽपरिस्रवः ॥ ५०० ॥

विजयोदयः—लोहेण पीदमुदगं व एवमत्र पदसंबंध । जस्स आलोइदा दोसा ण परिस्सवति अण्णत्तो यस्मै कथिता दोषा न परिस्रवन्त्यन्यतः । किमिव लोहेण पीदमुदगंव लोहेन संतप्तेन पीतमिवोदक । सो सः । एवंभूतोऽपरिस्सवो होदि अपरिस्रावी भवति ॥

अपरिस्राविता दशभिर्गाथाभिर्व्याकर्तुकामः पूर्वं तल्लक्षणार्थमिदमाह—

मूलारा—लोहेण अर्थात् संतप्तेन । पीदं पीतमन्तर्नीतं । ण परिस्सवंति । न प्रकटा भवान्ति । अण्णत्तो अन्यत. अन्यत्रेति यावत् । उक्तं च—

दोषो निवेशितो यत्र तप्ते तोयमिवायसि ॥
न निर्याति महासारे स ज्ञातव्योऽपरिस्रवः ॥

इस प्रकार अवपीडक गुणका वर्णन हुआ. अब अपरिस्राविता गुणका वर्णन करते हैं—

अर्थ—जैसे तपा हुआ लोहका गोला चारो तरफसे पानीका शोषण कर लेता है और वह शोषण किया गया पानी उससे बाहर निकलता नहीं वैसे क्षपकके दोष जो आचार्य सुनकर अपने मनमें ही रखते हैं अन्य जनों को इस क्षपकने ऐसे ऐसे अपराध किये थे ऐसा नहीं कहते हैं वे आचार्य अपरिस्रावी गुणके धारक हैं ऐसा समझना चाहिये.

---

दंसणणाणदिचारे वदादिचारे तवादिचारे य ॥
देसच्चाए विविधे सव्वच्चाए य आवण्णो ॥ ४८७ ॥

अतिचारास्तपोवृत्तज्ञानसम्यक्त्वगोचराः ॥
मनोवाक्काययोगेन जायंते त्रिविधा यतेः ॥ ५०१ ॥

प्रायश्चित्ते आलोचनातिचाराः 'आकंपियमित्यादिना' वक्ष्यंते। प्रतिक्रमणातिचारः स्वकृतातिचारस्य मनसा अजुगुप्सा, अज्ञानतः प्रमादात्कर्मगुरुत्वादालस्याद्वा इदमशुभकर्मबंधनिमित्तमनुष्ठितं दुष्टं कृतमित्येवमादि जुगुप्सा। अज्ञानतःकरणाभावः । उक्तोभयातिचारसमवाय उभयातिचारः । भवतोऽविवेको विवेकातिचारः। व्युत्सर्गातिचारः ऋतव'शरीरममताया अनिवृत्तिरशुभध्यानपरिणतिः कायोत्सर्गदोषाश्च । तपस' प्रागुक्ता एव। छेदस्यातिचारो न्यूनो जातोहमिति संक्लेशः। मूलातिचारभावतो रत्नत्रयानादानं। एवं विनयादीना अपि सामान्यलक्षणानुसारेण यथाशास्त्रमतिचाराश्चित्या. ।

अर्थ—सम्यग्दर्शन और ज्ञानमें अतिचार उत्पन्न हुए हों, व्रतमें अतिचार उत्पन्न हुए हो, देशरूप अतिचार उत्पन्न हुए हो अथवा सर्व प्रकारोंसे अतिचार उत्पन्न हुए हो ये सर्व अतिचार क्षपक आचार्य के पास विश्वासयुक्त होकर कहे.

विशेषार्थ—सम्यग्दर्शनके शंका, कांक्षा, विचिकित्सा, अन्यदृष्टिप्रशंसा और अन्यदृष्टिसंस्तव ऐसे अतिचार हैं. इनका स्वरूप दर्शनविनयके प्रकरणमें लिखा है.

ज्ञानके अतिचार—अकालमें अध्ययन करना, श्रुत और श्रुतधर अर्थात् जैनसिद्धान्तज्ञाता उनका अविनय करना, अनुयोगादिशास्त्रोंका अध्ययन करते समय उस अध्ययन के योग्य नियम धारण करने चाहिये परंतु वे धारण न करना, जिस उपाध्यायसे शास्त्र पढ लिया हो उसका नाम छिपाना अर्थात् मैं किसीके पास नहीं पढा हूं. स्वयं मेरेको शास्त्रज्ञान स्फुरित हो गया है ऐसा कहना पढते समय शब्द कम करना और जादा बढाना. अर्थका कथन शास्त्रसे विरुद्ध कहना, ये ज्ञानके अतिचार हैं.

तपके अतिचारोंका वर्णन—स्वयं भोजन नहीं करता है परंतु दुसरोंको भोजन कराता है. कोई भोजन कर रहा हो तो उसको अनुमति देता है. ये अतिचार मन से वचनसे और शरीरसे करना अर्थात् तुम भोजन करो ऐसा कहना, जो भोजन कर रहा है उसको तुम अच्छा करते हो ऐसा कहना ये वचनके द्वारा अतिचार हैं. इसी प्रकारसे शरीरसे और मन से भी अतिचार लगते हैं. भूख से पीडित होनेपर स्वयं मनमें आहारकी अभिलाषा करना, मेरेको पारणा कोन देगा, किसी घरमें मेरी पारणा होगी ऐसी चिंता करना यह अनशन तप में अतिचार है'

रसयुक्त आहारके विना यह मेरा परिश्रम दूर न होगा ऐसी चिंता करना षट्काय जीवोंको मन वचन और शरीर इन तीन योगोंमें से किसी एक योगसे बाधा देने के लिये प्रवृत्त होना. मेरेको बहोत निद्रा आती है. और यह अवमोदर्य नामक तप मैंने व्यर्थ धारण किया है. यह संक्लेशदायक है. संताप उत्पन्न करनेवाला ऐसा यह तप फिर मैं कभी भी न करूंगा ऐसा संकल्प करना ये अवमोदर्य तपके अतिचार हैं.

बहुत भोजन करनेकी मनमें इच्छा रखना, दूसरोंको बहुत भोजन करनेमें प्रवृत्त करूंगा ऐसा विचार रखना, तुम तृप्ति होनेतक भोजन करो ऐसा कहना यदि वह मैंने बहोत भोजन किया है ऐसा कहे तो तुमने अच्छा किया ऐसा बोलना. अपने गले को हाथसे स्पर्शकर यहां तक तुमने भोजन किया है ना ? ऐसा हस्त चिन्ह से अपना अभिप्राय प्रकट करना. ये सब अवमोदर्य तपके अतिचार हैं.

अब वृत्तिपरिसंख्यान तपके अतिचार—मैं सात घरोंमें ही प्रवेश करूंगा, अथवा एक पाटकमें प्रवेश करूंगा, किंवा दरिद्री के गृहमें ही आज प्रवेश करूंगा. इस प्रकारके दातासे अथवा इस प्रकार के स्त्रीसे यदि दान मिलेगा तो लेंगे ऐसा संकल्प कर सात घरसे अधिक घर में प्रवेश करना, दूसरोंको मैं भोजन कराऊंगा इस हेतूसे भिन्न पाटकमें प्रवेश करना, ये वृत्तिपरिसंख्याके अतिचार हैं.

रसपरित्याग तपके अतिचार-रसका त्याग करके भी रसमें अत्यासक्ति उत्पन्न होना, दुसरोंको रसयुक्त आहारका भोजन कराना और रसयुक्त भोजन करनेकी सम्मति देना ये इस तप के अतिचार हैं.

कायक्लेशतपके आतापनयोगका अतिचार–उष्णसे पीडित होनेपर थंड पदार्थोंके संयोगकी इच्छा रखना, यह संताप मेरा कैसा नष्ट होगा ऐसी चिंता उत्पन्न होना, पूर्वमें अनुभवन किये गए शीतल पदार्थोंके स्थानका स्मरण होना, कठोर धूपका द्वेष करना, शरीरको पिच्छीसे स्पर्श न करके ही धूपसे शरीरसंताप होनेपर छायामें प्रवेश करना, इत्यादिक अतिचार आतापनयोगके हैं.

वृक्षमूल योगके अतिचार–इस योगको धारण करनेपर भी अपने हाथसे, पावसे और शरीरसे जलकायिक जीवोंको दुःख देना, अर्थात् शरीरपर लगे हुए जलकण हाथसे पोछना अथवा पावसे शिलापर अथवा फलकपर संचित हुआ जल अलग करना, गीली मट्टीकी जमीनपर सोना, जहां जलप्रवाह बहता है ऐसे स्थानमें अथवा खोल प्रदेशमें बैठना, वृष्टिप्रतिबंध होनेपर कब वृष्टि होगी ऐसी मनमें चिंता करना, वृष्टि होने

लगी तो कब इसका उपशम होगा ऐसा संकल्प करना, अथवा वृष्टिका निवारण करनेके लिये छत्र, चटाई वगैरह धारण करना.

अभ्रावकाशके अतिचार—सचित्त जमीनपर, त्रससहित हरितवनस्पति जहां उत्पन्न हुई है ऐसे जमीनपर, छिद्रसहित जमीनपर शयन करना, जमीन और शरीरको पिच्छिकासे स्वच्छ किये विना हाथ और पाय संकुचित करके अथवा फैला करके सोना, एक बाजूसे दुसरी बाजूपर सोना अर्थात् करवट बदलना, अपना अंग खुजलाना, हवा और थंडीसे पीडित होनेपर इनका कब उपशम होगा ऐसा मनमें संकल्प करना, शरीरपर यदि बर्फ गिरा होगा तो वांसके टुकडेसे उसको हटाना, अथवा जलके तुषारोंको मर्दन करना, इस प्रदेशमें धूप और हवा बहुत है ऐसा विचार कर सक्लेश परिणामसे युक्त होना, अग्नि और आच्छादन वस्त्रोंका स्मरण करना ये सब अभ्रावकाशके अतिचार हैं

प्रायश्चित्त तपेक अतिचार—आकंपित, अनुमानित वगैरे दोष इस तपके अतिचार हैं. ये अतिचार होनेपर इसके विषयमें मनमें ग्लानि न करना, अज्ञानसे, प्रमादसे, तीव्र कर्मके उदयसे और आलस्यसे मैंने यह अशुभकर्मका बंध करनेवाला कर्म किया है मैंने यह दुष्ट कर्म किया है ऐसा उच्चारण करना प्रतिक्रमणके अतिचार हैं आ-लोचना और प्रतिक्रमणके अतिचारोंको उभयतिचार कहते हैं. परिणामोंके द्वारा विवेक न होना यह विवेकका अति-चार है शरीरपरसे ममता हटाना व्युत्सर्ग तप है परंतु ममत्व दूर नहीं करना यह व्युत्सर्ग तपका अतिचार है.

अशुभध्यानमें परिणमन होना और कायोत्सर्गके दोष ये तपके अतिचारमें कहे गये हैं.

छेदके अतिचार—मैं न्यून हो गया हूं ऐसा मनमें संक्लेश करना. रत्नत्रयको भावपूर्वक ग्रहण न करना यह मूलका अतिचार हैं.

अतिचारके देशत्याग और सर्व त्याग ऐसे दो भेद हैं. मन, वचन, शरीर, कृत, कारित और अनुमोदन ऐसे नऊ भेदोंमेंसे किसी एकके द्वारा सम्यग्दर्शनादिकोंमें दोष उत्पन्न होना ये देशत्यागातिचार है और सर्व प्रकार से अतिचार उत्पन्न होना यह सर्वत्यागातिचार है. क्षपकको इसमें अतिचार लग सकते हैं इसलिये वह गुरुके समक्ष इसमें आचोलना करे.

---

आयरियाणं वीसत्थदाए भिक्खू कहेदि सगदोसे ॥
कोई पुण णिद्धम्मो अण्णेसिं कहेदि ते दोसे ॥ ४८८ ॥

विश्वस्तो भापते सर्वानाचार्याणामसौ न स' ॥ (?)
आचार्यो भापतेऽन्येभ्यस्तां स्तुवन् स्विदधार्मिकः ॥ ५०२ ॥ (?)

विजयोदया—आइरियाण आचार्याणा । भिक्खु । कहेदि कथयति । वीसत्थदाए विश्वासेन । किं ? सगदोसे स्वातिचारान् । कोई पुण कश्चित्पुनराचार्यपाश । णिद्धम्मो निष्क्रान्तो वहिर्भूतो जिनप्रणीताद्धर्मात् । अण्णेसिं अन्येभ्य' । कहेदि ते दोसे कथयति आलोचितान्दोपान् । अनेन किलायमपराध कृत इति ।

मूलारा—वीसत्थदाए विश्वासेन । कहेदि अनेन किलायमपराधः कृत इति परेभ्यः प्रकाशयति ।

अर्थ—आचार्योंके आगे कोई क्षपक विश्वास रखकर ये आचार्य मेरे दोप अन्योंको नहीं कहेंगे ऐसा विश्वास रखकर कहता है. परतु कोई आचार्य जिनप्रणीत धर्मसे बाहिर होकर इसने अमुक दोप किया है ऐसा अन्यजनोंको कहते हैं. अन्यजनोंको क्षपकके दोप कहनेवाले आचार्य जिनधर्मभ्रष्ट हो गये ऐसा समझना चाहिये क्षपक तो विश्वाससे कहता है और ये उसका भंडाफोड सर्व लोगोंके समक्ष करते हैं ऐसा करना जैनधर्ममें निपिद्ध माना है.

---

तेण रहस्सं भिंदतएण साधू तदो य परिचत्तो ॥
अप्पा गणो य संघो मिच्छत्ताराधणा चेव ॥ ४८९ ॥

रहस्यभेदिना तेन त्यक्ताः कल्मषकारिणा ॥
साधुरात्मा गणः संघो मिथ्यात्वाराधना कृता ॥ ५०३ ॥

विजयोदया—तेण तेन । रहस्सं भिंदतएण प्रच्छायालोचितदोपप्रकाशनकारिणा । साहू साधु' । तदो य परिचत्तो ततस्तु परित्यक्त । स्वदोपप्रकाशने कृते मया लज्जावानय दु खितो भवति । आत्मान वा घातयेत् । कुपितो वा रत्नत्रय त्यजेत् । इति स्वचित्तेऽकुर्वता परित्यक्तो भवति । अप्पा परिचत्तो, गणो परिचत्तो, संघो परिचत्तो, इति प्रत्येकाभिसंबंध । मिच्छत्ताराहणा चेव मिथ्यात्वाराधना दोपो भवति ॥

मूलारा—रहस्सं प्रच्छाद्यमालोचितदोषं । भिदतएण प्रकाशयता । सगो स आलोचितस्वदोषः । परिचत्तो स्वार्थभ्रंशकत्वेनापकृत. । एतत्संघातैर्योज्यं । मिच्छत्ताराधना मिथ्यात्वमुत्पादितं स्यात्मन इत्यर्थः । प्रकाशयति ॥

अर्थ–क्षपकके आलोचित दोष आचार्यको प्रकट करना योग्य नहीं हे परंतु यदि उसने प्रकट किये तो क्षपक साधुका उसने उसी समय त्याग किया ऐसा समझना चाहिये. मैं यदि इसके दोष प्रकट करूं तो यह लज्जावान् क्षपक अपने मनमें दुःखित होगा, यह अपना घात करेगा, क्रोधी बनकर रत्नत्रयधर्मका त्याग भी कर देगा. ऐसा विचार मनमें लाकर क्षपकके दोष कहना उनके लिये योग्य नहीं था. दोष कहनेमें आत्मत्याग, गणत्याग और संघत्याग आचार्यने किया और वे मिथ्याराधक बन गये ऐसा मानना चाहिये.

---

इत्थ साधु परित्यक्तो भवतीत्याचष्टे—

लज्जाए गारवेण व कोई दोसे परस्स कहिदोवि ॥
विप्परिणामिज्ज उधावेज्ज व गच्छाहि वा णिज्जा ॥ ४९० ॥

रहस्यस्य कृते भेदे पृथग्भूयावतिष्ठते ॥
कोपतो मुंचते वृत्तं मिथ्यात्वं वा प्रपद्यते ॥ ५०४ ॥

विजयोदया—लज्जाए लज्जया । गारवेण व गुरुतया वा । कोई कश्चित् । दोसे दोषान् । परस्स परस्मे । कहिदो वि कथितोऽपि । विप्परिणामेज्ज पृथग्भवेत् । नाय मम गुरु. प्रियो यदि स्यार्त्कि मदीयान्दोषान्निगदति । मदीया वहिश्चरा प्राणा गुरुरयमिति या सभावना सात्र नष्टेति चिंता विपरिणाम । उधावेज्ज वा त्यजेद्वा रत्नत्रयं दोषप्रकटनेन कुपित. । गच्छेज्ज वा गणातर प्रविशेत् ॥

कथं साधुः परित्यक्त इत्यत्राह—

मूलारा—गारवेण मानगुरुत्वेन । परस्स परस्य । विप्परिणामेज्ज विपरीतं परिणमेत । पृथग्भवेत् नायं मम गुरु. । प्रियो यदि स्यार्त्कि मदीयान्दोषान्निगदेत् । मदीया वहिश्चराः प्राणा गुरुरयमिति संभावना सात्र नष्टेति चिंता हि विपरिणामः । अयमर्थः निर्यापकाचार्येण परस्मै गुह्ये कथिते सति कश्चित्क्षपको लज्जया गारवेण वा विपरिणमेत । उधावेज्ज व त्यजेद्वा रत्नत्रयमिति शेषः । गच्छाहि वा णिज्जा गच्छाद्वा निर्यायात् । गणाद्वा निर्गच्छेत् । गणातर प्रविशेदित्यर्थः । उधावेज्ज व गच्छेज्ज मिच्छत्तमिति पाठे त्यजेद्वा चारित्रं गच्छेद्वा मिथ्यात्वमिति व्याख्येयम् । तथा चोक्तं—

रहस्यस्य कृते भेदे पृथग्भूयावतिष्ठते ॥
कोपतो मुंचते वृत्तं मिथ्यात्वं वा प्रपद्यते ॥

उन्होंने साधुका त्याग किया ऐसा समझना चाहिये उसका स्पष्टीकरण—

अर्थ—आचार्य क्षपकके दोष अन्य मुनिओंको कहने पर क्षपक लज्जासे अथवा गर्वसे ये गुरु मेरेको हितकर नहीं जंचते हैं यदि ये हितकर होते तो मेरे दोष क्या अन्य जनोंके समक्ष ये प्रगट करते ? मैं आजतक ये गुरु मेरे बाह्य प्राण हैं ऐसा समझता था परंतु आज वह समझना निर्मूल है ऐसा अनुभव मेरेको आया है. दोषके कहनेसे गुरूके विषयमें क्षपकके उपर्युक्त परिणाम बन जाते हैं. इतना होकर ही रहता नहीं. परंतु वह क्षपक दोष प्रकट करनेसे कुपित होकर रत्नत्रयका त्याग करनेके लिये उद्युक्त होता है अथवा आचार्यका संघ छोडकर अन्य संघ में प्रवेश करता है.

---

आत्मपरित्यागं व्याचष्टे—

कोई रहस्सभेदे कदे पदोसं गदो तमायरियं ॥
उद्दावेज्ज व गच्छं भिंदेज्ज वहेज्ज पडिणीओ ॥ ४९१ ॥

मारयत्यथवा सूरिं साधुर्मानग्रहाकुलः ॥
संसारकाननभ्रान्तिं न मन्यंते हि मानिनः ॥ ५०९ ॥

विजयोदया—कोई कश्चित्। रहस्सभेदे कदे रहस्यभेदे कृते। पदोसं गदो प्रद्वेषं गतः। तमायरियं तमाचार्यं। उद्दावेज्ज व मारयेत्। गच्छं भिंदेज्ज गणभेदं कुर्यात्। किमनेन सूरिणा स्नेहरहितेन, यथा ममापराधं प्रकटितवान् एवं युष्मानपि निरपराधान्दूषयिष्यतीति ब्रुवन्। होज्ज पडिणीओ प्रत्यनीको भवेत् ॥

कथमात्मा परित्यक्त इत्यत्राह —

मूलारा—पदोसं प्रद्वेषं। उद्दावेज्ज मारयेत्। गच्छं भिंदेज्ज गच्छं भिंद्यादाचार्याद्गणस्य भेदं कुर्यात्। यथायं विश्वस्तो ममालोचितदोषं प्रकटीकुर्यात्तथा युष्माकमपि प्रकटयिष्यतीति ब्रुवन्नाचार्याद्गणस्य विघटनं कुर्यादित्यर्थः। पडिणीगो प्रत्यनीकः प्रतिकूल इत्यर्थः ॥

आत्मपरित्याग दोषका स्वरूप कहते हैं—

अर्थ–आचार्य के द्वारा क्षपकके अपराध सर्वजन समक्ष प्रगट होजाने पर क्षपकके मनमें यदि द्वेष बढ गया तो वह आचार्यको मारेगा अथवा गच्छमें फूट उत्पन्न करेगा अर्थात् इस आचार्यने जैसे मेरे दोष प्रगट किये हैं वैसे वह तुम्हारे दोष भी प्रगट करेगा, निरपराधी ऐसे तुमको यह दूषण लगावेगा. यह आचार्य स्नेहरहित है इसको छोड दो ऐसा बोलकर वह सर्वसंघमें भेदभाव उत्पन्न करेगा तथा आचार्यका शत्रु बन जावेगा.

---

गणत्याग कथयति—

जह धरिसिदो इमो तह अम्ह पि करिज्ज धरिसणमिमोत्ति ॥
सव्वो वि गणो विप्परिणमेज्ज छंडेज्ज वायरियं ॥ ४९२ ॥

विश्वस्तो भाषते शिष्यः सूरेरग्रे स्वदूषणम् ॥
परस्याथ पुनर्ब्रूते सदाचारबहिर्भवः ॥ ५०६ ॥
यथायं दूषितोऽनेन दूषयिष्यति नस्तथा ॥
इति क्रुद्धो गणः सर्वः पृथक्त्वं प्रतिपद्यते ॥ ५०७ ॥

विजयोदया—जह धरिसिदो इमो वृथा दूषितोऽयं । तह तथा । अह्म पि करेज्ज धरिसणमिमोत्ति अस्मान्दूषितान्कुर्यात् अयमिति । विप्परिणमेज्ज पृथग्भवेत् । छंडेज्ज वायरिय त्यजेद्वाचार्यं त्यजतीति कथ्येत तेन गणस्त्यक्त इति पूर्वसूचित । ततोऽनयोर्न सगतिरित्यत्रोच्यते । यत एव सूरिणा द्वेषप्रत्याख्यानपरेण त्यक्तोऽसौ तत एव गणस्त त्यजति ॥

कथ गण॰ परित्यक्त इत्यत्राह—

मूलारा—धरिसिदो दूषितः गुह्यप्रकाशनेनापकृतः । छंडेज्ज त्यजेत् ।

गणत्यागका वर्णन—

जैसा आचार्यने इस क्षपकको दोष कह करके दूषित किया है वैसा यह हमको भी दूषित करेगा ही ऐसा विचार कर गण भी आचार्यके प्रतिकूल होकर उसका त्याग करेगा अथवा उससे स्वयं अलग होगा. दोषका कथन करनेवाले आचार्यने गणका त्याग किया ऐसा पूर्वमें कहा है और यहां गण आचार्य को छोड देता है ऐसा कहते

है अत' यह कथन असंगतसा दीखता है उत्तर—दोषोंका वर्णन करनेवाले आचार्यने यदि गणका त्याग किया तो वह भी आचार्यका त्याग करेगा ही. अतः इस कथनमें असंगतपना नहीं है.

---

संघस्त्यक्तो भवतीत्येतद्याचष्टे—

तह चेव पवयण सव्वमेव विप्परिणयं भवे तस्स ॥
तो से दिसावहारं करेज्ज णिज्जूहणं चावि ॥ ४९३ ॥

**एतस्याचार्यकं संघो विच्छिनत्ति चतुर्विधः ॥**
**निर्घाटयति वा रुष्टो रोषतः क्रियते न किम् ॥ ५०८ ॥**

विजयोदया—तह चेव पवयण सव्वमेव तथैव प्रवचन सघः सर्व एव प्रोच्यते रत्नत्रय यस्मिन्निति शब्दव्युत्पत्तौ सघवाची भवति प्रवचनशब्द. । विप्परिणदं विरुद्धतया परिणतं प्रवृत्तं । हवे तस्स भवेत्तस्य । तो ततः । से तस्य । दिसापहरणं करेज्ज कुर्यात् सघ । णिज्जूहणं वापि करेज्ज इति पदसंबंध । परित्यागं वा कुर्यात् ॥

कथं संघः परित्यक्त इत्यत्राह—

मूलारा—पवयणं प्रवचनशब्दोऽत्र संघवाची प्रोच्यतेऽस्मिन्रत्नत्रयमिति व्युत्पत्तेः । विप्परिणदं विरुद्धतया प्रवृत्तं । तो ततो विपरिणमनाद्धेतोः । से तस्य रहस्यभेदकस्य । दिसापहरणं आचार्यपदभ्रंशनं । णिज्जूहणं निर्घाटनं । उक्तं च—

एतस्याचार्यकं संघो विच्छिनत्ति चतुर्विधः ॥
निर्घाटयति वा रुष्टो रोषतः क्रियते न किम् ॥

सघका त्याग भी होता है ऐसा वर्णन—

अर्थ—जिसमें रत्नत्रयका प्रवचन–उपदेश किया जाता है ऐसे जनसमुदायका नाम संघ है. अर्थात् मुनि, आर्यिका, श्रावक और श्राविका इनको संघ कहते हैं यह सब संघ दोष प्रगट करनेवाले आचार्य से विरुद्ध होकर उसका आचार्यपद हरण करेंगे. अथवा उसका त्याग करेंगे.

---

मिथ्यात्वाराधनाप्रतिपादनार्था गाथा—

जदि धरिसणमेरिसयं करेदि सिस्सस्स चेव आयरिओ ॥
धिद्धि अपुट्ठधम्मो समणोत्ति भणेज्ज मिच्छजणो ॥ ४९४ ॥

आचार्यो यत्र शिष्यस्य विदधाति विडंबनां ॥
धिक्तान्निर्धर्मकान्साधूनिति वक्ति जनोऽखिलः ॥ ५०९ ॥
विश्वासघातका एव दुष्टा· सन्ति दिगंवराः ॥
ईदृशीं कुर्वते निंदां मिथ्यात्वाकुलिता जना· ॥ ५१० ॥

विजयोदया—जइ धरिसणमेरिसय यदि दूपण एवभूत । करेदि करोति । सिस्सस्स चेव शिष्यस्यैव । क' आचार्य' । धिद्धि अपुट्ठधम्मो समणोत्ति भणिज्ज धिग्धिग् अपुष्टधर्मान् श्रमणान् । इति भणेज्ज मिच्छजणे वदेन्मिथ्यादृष्टिर्जन ॥

मिथ्यात्वाराधनाद्वारायातं जनापवादमाह —

मूलारा--धरिसण धर्पणं विडंवना। धिद्धी धिग् धिग् । अपुट्ठधम्मे अपुष्टधर्मण· निर्धर्मकान् श्रमणान् दिगंबरान् । तथा चोक्तम्—

आचार्यो यत्र शिष्यस्य विदधाति विडंवनाम् ॥
धिक्तान्निर्धर्मकान्साधूनिति वक्ति जनोऽखिलः ॥

दोप प्रगट करनेसे मिथ्यात्वकी आराधना होगी ऐसा वर्णन—

अर्थ--यदि आचार्य दोप प्रगट कर शिष्यको दूपित करेंगे तो मिथ्यात्वी लोक ये जैनमुनि अपने धर्मको पुष्ट नहीं वना सकते हैं, अपने हाथसे ये अपने धर्मका नाश करते हैं ऐसे वचन वोलकर धिकार करेंगे, इस लिये दोप प्रगट करना यह कार्य धर्मविध्वंसक है ऐसा समझना चाहिये

---

प्रस्तुतापरिस्रावितोपसंहारगाथा प्रसिद्धार्था-

इच्चेवमादिदोसा ण होंति गुरुणो रहस्सधारिस्स ॥
पुट्ठेव अपुट्ठे वा अपरिस्साइस्स धीरस्स ॥ ४९५ ॥

पृष्टोऽपृष्टोऽपि यो ब्रूते न रहस्यं कदाचन ॥
इत्यादयो न विद्यन्ते दोपास्तस्य गणेशिनः ॥ ५११ ॥
इति विमुच्य रहस्यविभेदकं भजत गुह्यनिगूहकमंजसा ॥
न हि विशुद्धहिताहितवस्तवो हितमपोह्य भजंत्यहितं जनाः ॥ ५१२ ॥
इति अपरिस्रवः ।

विजयोदया – इच्चेवमादि दोसा इति । अप्परिस्सव तु गद ॥

मूलारा—पुठ्ठे व अपुठ्ठे वा अपरिस्साइस्स किमनेनालोचितमिति परेण पृष्टे प्रश्ने कृतेऽपृष्टे वा अपरिस्राविणो गुह्यमकथयतः । धीरस्स स्वरूपचेष्टादिना विकारमगच्छतः । अयमत्राभिप्रायो–य शिष्योक्तं दोपं पृष्टोऽपृष्टो वा परस्मै न वक्ति, नापींगितादिना प्रकाशयति स रहस्यधारी सूरिरपरिस्रावीति विख्यातिं बिभ्राणस्तैस्तैर्दोपैर्मनागपि न स्पृशति इति । अपरिस्रावी ॥

अत्र यहां प्रस्तुत अपरिस्राविता गुणका उपसंहार करते हैं—

अर्थ—जो आचार्य अपरिस्रावि गुणके धारक हैं वे शिष्यके—क्षपकके दोप सुनकर मनमें रख लेते हैं और उनको कोई पूछे वा मत पूछे वे कभी उसके दोप अन्यको कहते ही नहीं दोप प्रगट करनेसे क्या हानि होती है इसका अपरिस्रावी आचार्य को पूर्ण ज्ञान रहता है अत. वे कभी दोपप्रगटन नामका धर्मध्वंस करनेवाला कार्य नहीं करते हैं.

---

णिव्ववगो इत्येतत्सूत्रपदव्याख्यानायोत्तरप्रबंध —
संथारभत्तपाणे ' यस्य येनाभिसंबंधो दूरस्थस्यापि तस्य स. ' इति कृत्वा –

संथारभत्तपाणे असमणुण्णे वा चिरं व कीरंते ॥
पडिचरगपमादेण य सेहाणमसंवुडगिराहिं ॥ ४९६ ॥

शुश्रूपकप्रमादेन शय्यायामासनादिके ॥
संपन्ने दीनवाक्येन शिष्यकाणामसंवृते ॥५१३॥

विजयोदया--इति क्रियाभि पदसंबधोऽत्र कार्यः । संस्तरे भक्तपाने वा । अमणुण्णे अमनोज्ञे । कीरतो क्रियमाणे । कुविदो कुपितो भवेत्क्षपक मेर वा मर्यादां वा । सथारभत्तपाणे अमणुण्णे वा कीरते कुविदो हवेज्ज खवगो मेर वा भेत्तुमिच्छेज्ज । भेत्तुमिच्छेत् । चिर व कीरते चिराद्वा संस्तरकरणे भक्तपानानयने वा । पडिचरगपमादेन वा निर्यापकाना वैयावृत्यकरणे य प्रमादस्तेन वा कुपितो भवेत् । मर्यादा वा आत्मीया भेत्तुं इच्छेत् । सेहाणमसवुडगिराहिं अगृहीतार्थाना असवृताभि परुषाभिर्वा कुपितो भवेत् ॥

निर्वापकत्वमेकादशभिर्गाथाभिर्व्याचिख्यासुरादौ तत्तन्निमित्तसंनिधानादुत्पन्ने क्षपकस्य चित्तसंतापे निर्यापकाचार्येणेत्थंभूतेन सता तच्चित्तं निर्वापणीयमिति गाथात्रयेणाभिधत्ते—

मूलारा – अमणुण्णे अमनोज्ञे अनभिरुचिते । चिरं व चिरेण वा शीघ्रमक्रियमाण इत्यर्थः । कीरंते क्रियमाणे । पडिचरयपमादेण वैयावृत्त्यकराणा तत्कारणानवधानेन । सेहाणं शैक्षाणा । असंवुडगिराहिं परुषाभिः प्रतिकूलाभिर्वाग्भि. ।

जिसका जिसके साथ संबंध है वह दूर भी होगा तो भी वह संबंधी पदार्थ उसका ही माना जायगा इस नीतिके अनुसार यहां क्षपकका वर्णन करते हैं—

अर्थ—क्षपककी शुश्रूपा करनेवाले परिचारक संस्तरकी रचना यदि अमनोज्ञ मनोहर–न करेंगे और खाने पीनेके पदार्थ अमनोहर होंगे तो वह क्रोधयुक्त होगा अथवा समाधिमरणके नियमोंका भग करेगा. किंवा संस्तर करनेमें अगर देरी लगेगी तो भी वह कुपित होगा, आहार और पेय पदार्थ लानेमें देरी लग जाय तो कुपित होगा परिचारक सेवा शुश्रूपा करनेमें अलसी वन जाने पर उसको कोप उत्पन्न होगा. अथवा अपनी मर्यादा वह छोड देगा. जिनको सल्लेखनाविधि मालुम नहीं है ऐसे असंयमी जनके परुप–कठोर भापणसे वह क्रोधयुक्त होगा तो उसको क्षमाधारण कर प्रसन्न करना चाहिये

---

सीदुण्हछुहातण्हाकिलामिदो तिव्ववेदणाए वा ॥
कुविदो हवेज्ज खवओ मेरं वा भेत्तुमिच्छेज्ज ॥ ४९७ ॥

वेदनायामसह्यायां क्षुत्तृष्णोष्णहिमादिभिः ॥
क्षपकः कोपमासाद्य मर्यादां विविभित्सति ॥ ५१४ ॥

आगेके भवमें मेरेको अच्छे २ पदार्थ प्राप्त होने चाहिये ऐसा विचार करना यह निदान नामक आर्तध्यान है

चोरी करनेका वार २ विचार करना, चारेस धन न लूटा जावे इस लिये उसका संरक्षण करनेके लिये शस्त्रादिक ग्रहणकर उनका रक्षण करनेके रुद्रपरिणाम वारंवार होना, छह प्रकारके आरंभ करना अर्थात् षट्कायजीवोंकी जिसमें हिंसा होती है ऐसा आरंभ करनेमें तल्लीन होना इसको रौद्रध्यान कहते हैं. हिंसा करनेवाले मनुष्यको रुद्र कहते हैं ऐसे मनुष्यमें उत्पन्न हुआ जो ध्यान उसको रौद्रध्यान कहते हैं ऐसा रौद्र ध्यानका लक्षण संक्षेपसे कहा है. ये आर्त और रौद्रध्यान दोनो भी त्यागने चाहिये क्योंकि ये महाभयके कारण हैं और सुगतिके प्रतिबंधक हैं अर्थात् दुर्गतिके कारण हैं ये धर्मध्यान और शुक्लध्यानके बाधक हैं ऐसा समझकर धर्म और शुक्ल ध्यानमें क्षपक सदा स्थिर रहता है

---

किमर्थमसौ ध्यानयो शुभयोर्वर्तेत इत्याशंकाया ध्यानप्रवृत्तौ कारणमाचष्टे—

**इंदियकसायजोगणिरोधं इच्छं च णिज्जरं विउलं ॥**
**चित्तस्स य वसियत्तं मग्गादु अविप्पणासं च ॥ १७०५ ॥**

**ध्याने प्रवर्तते कांक्षन्कषायाक्षनिरोधनम् ॥**
**वश्यत्वं मनसो मार्गादभ्रंशं निर्जरां पराम् ॥ १७७२ ॥**

विजयोदया—इंदियकसायजोगणिरोधं स्पर्शादिपूपजात उपयोग इंद्रियशब्देनोच्यते । कषाया क्रोधादयस्तै र्योग संबंधस्तस्य निरोधं निवारणामिच्छन्निर्जरां च विपुलामिच्छन्, वस्तुयाथात्म्यसमाहितचित्तस्य नेंद्रियविषय जन्योपयोगसंभव , कषायाणा चोत्पत्ति , चित्तस्स य वसियत्त चित्तस्य स्ववशत्वं इच्छन् स्वेष्टविषये चित्तमसकृत्स्थापयतोऽनिष्टाच्च व्यावर्तयत स्ववशं भवति ॥ चित्तस्य मग्गादो अविप्पणासं च मार्गाद्रत्नत्रयादविप्रणाशं च वाछन् , अशुभध्यानप्रवृत्तौ रत्नत्रयात्प्रच्युतो भवामीति ध्याने प्रयतते ॥

धर्मध्यानस्य प्रयोजनमातर परिकरं च निर्देष्टुं गाथाचतुष्टयमाचष्टे—

मूलारा—जोग संबधः । इच्छं वाछन् । णिज्जरं शुभकर्मैकदेशसंक्षयं । विउलं वाह्याभ्यतरतपोविकल्पातरसाध्य निर्जरातोऽतिशायिनीं । वसियत्त स्ववश्यता । स्वेष्टेऽर्थे चित्तं स्थापयितु अनिष्टाच्च व्यावर्तयितुमित्यर्थः । मग्गादु अविप्पणास रत्नत्रयादप्रच्यवनम् ।

यह क्षपक शुभध्यानोंमें क्यों प्रवृत्त होता है इस शंकाके उत्तरमें कारणका निवेदन करते हैं–

अर्थ—स्पर्शादिक विषयोमें उत्पन्न हुआ जो उपयोग उसको यहां इंद्रिय कहते हैं इंद्रिय और कषायोंका संबंध नष्ट करनेकी यदि इच्छा हो, कर्मोंकी विपुल निर्जरा करनेकी यदि इच्छा हो, तो तू अपना चित्त स्वाधीन रखने का प्रयत्न कर. वस्तुके यथार्थ स्वरूप को जाननेमें अपने मनको एकाग्र कर. जब मन स्वाधीन होता है तब इंद्रियोंके विषयके प्रति उपयोग नहीं लगता है और कषायों की भी उत्पत्ति नहीं होती है. चित्तको अपने इष्ट विषयमें अर्थात् उत्तम क्षमादिक धर्मोंमें स्थिर करना चाहिये. और अनिष्टविषयोंसे परावृत्त करना चाहिये रत्नत्रयमार्गसे अपनी च्युति न हो ऐसी इच्छा करनेवाले क्षपक को अशुभ ध्यानका त्याग करना चाहिये. और शुभ ध्यानमें स्थिर रहना चाहिये

---

ध्यानपरिकरप्रतिपादनायोत्तरगाथा—

किंचिवि दिट्ठिमुपावत्तइत्तु झाणे णिरुद्धदिट्ठीओ ॥
अप्पाणंहि सदिं संधित्ता संसारमोक्खट्ठम् ॥ १७०६ ॥

एकाग्रमानसश्चक्षुर्व्यावर्त्य परवस्तुतः ॥
आत्मनि स्मृतिमाधाय ध्यानं श्रयति मुक्तये ॥ १७७२ ॥

विजयोदया—किंचिवि दिट्ठिमुपावत्तइत्तु वाह्यद्रव्यालोकात् किंचिच्चक्षुर्व्यावर्त्तयित्वा । झाणे णिरुद्धदिट्ठीओ एकविषये परोक्षज्ञाने निरुद्धचैतन्य.। दृष्टिनिमित्ते हि चैतन्ये दृष्टिशब्दोऽत्र युक्त । अप्पाणहि आत्मनि । सदिं स्मृतिं । संधित्ता संधाय । स्मृतिशब्देनात्र श्रुतज्ञानेनावगतस्यार्थस्य स्मरणमुच्येत, ससारमोक्खट्ठं ससारविमुक्तये ॥

प्रयोजनमुक्त्वा परिकर्माह—

मूलारा—किंचिवि किंचित्व । दिट्ठिं चक्षु.। उव्वेत्तयितु उपावर्त्य । वाह्यद्रव्यालोकनाद्व्यावर्त्य नासाग्रे दृष्टिं कृत्वेत्यर्थ.। णिरुद्दिट्ठीओ एकविषये परोक्षज्ञाने निरुद्धचैतन्य. दृष्टिनिमित्ते हि चैतन्ये दृष्टिशब्दोत्र प्रयुक्तः । अप्पाणम्मि स्वसंवेदनसुव्यक्ते शुद्धिचिद्रूपे स्वात्मनि । सदिं श्रुतज्ञानाधिगतार्थस्मरणं । उक्तं च—

पूर्वश्रुतेन संस्कारं स्वात्मन्यारोपयेत्ततः ।
तत्रैकाग्र्यं समासाद्य न किंचिदपि चिंतयेत् ॥

अपि च— गहिय तं सुयणाणा पच्छा सवेयणेण भावेज्ज ॥

जाणहु सुअमवलवदि मोमज्झदि अप्पसब्भावे ॥

ध्यानका परिकर कहनेके लिये गाथा—

अर्थ—नेत्रोंको बाह्य पदार्थोंके अवलोकनसे हटाना चाहिये अर्थात् नाकके अग्रभागपर नेत्रोंको निश्चल करना चाहिये तदनंतर एक विषयको धारण करनेवाले परोक्षज्ञानमें अपना ज्ञानोपयोग स्थिर करना चाहिये. स्वसंवेदनज्ञानसे जिसका अनुभव आता है ऐसे अपने शुद्ध चैतन्यरूप आत्मामें श्रुतज्ञानके साहाय्यसे आगमसे जाने हुए पदार्थोंका स्मरण करना चाहिये. यह ध्यान मुनिगण संसारसे मुक्त होनेके लिये करते हैं.

---

**पच्चाहरित्तु विसयेहिं इंदियेहिं मणं च तेहिंतो ॥**

**अप्पाणम्मि मणं त जोगं पणिधाय धारेदि ॥ १७०७ ॥**

**प्रत्याहृत्य मनोऽक्षाणि विषयेभ्यो महाबलः ॥**

**प्रणिधानं विधत्तेसावत्मनि ध्यानलालसः ॥ १७७४ ॥**

विजयोदया—पच्चाहरित्तु प्रत्याहृत्य । विसयेहिं विषयेभ्यः। इंदियाइं इंद्रियाणि मणं च मनश्च व्यावर्त्य । तेहिंत्तो विषयेभ्य. । मण त धारेदि तन्मनो धारयति । क अप्पाणहि आत्मनि । जोग योगं वीर्यांतरायक्षयोपशमजवीर्यपरिणामं । पणिधाय प्रणिधायास्थाप्य,एतदुक्तं भवति वीर्यपरिणामेन नोइंद्रियमतिं धारयतीति ॥

पुनरातरसेव परिकर्माह—

मूलारा—पच्चाहरित्तु व्यावर्त्य । इंदियाइ चक्षुराद्युपयोगान् । मण नो इंद्रियमतिं । तेहिंतो तेभ्यः । च विपयीकृत । जोगं पणिधाय वीर्यांतरायक्षयोपशमजं वीर्यपरीणाममवष्टभ्य वीर्यपरिणामविशेपेण शुद्धस्वात्मनि निर्विषया नोइंद्रियमतिं धारयतीत्यर्थः । स एपोऽन्त॰ परिकरः सूत्रकृतोक्तः । बाह्यस्त्वयं—

पर्वतगुहायां, गिरिकंदरे, दर्यां, तरुकोटरे, नदीपुलिने, पितृवने, जीर्णोद्याने, शून्यागारे, वा व्यालमृगाणा पशूना पक्षिणा, मनुष्याणा वा ध्यानविघ्नकारिणा सान्निध्यशून्ये, तत्रस्थैरागतुभिश्च क्षुद्रजीवैर्वर्जिते उष्णशीतोने प्रवातादिविहिते निरस्तेन्द्रियमनोविक्षेपहेतौ, शुचावनुकूलस्पर्शभूभागे मंदमंदप्राणापानप्रचारो नाभेरूर्ध्वं, हृदि ललाटे वा यत्र वा मनोवृत्तिं यथापरिचयं प्रणिधाय ध्यायतीति तथैव चाज्ञाचक्षुस्तत्र भवतो भगवद्रामसेनपादाः—

यथोक्तलक्षणो ध्याता ध्यातुमुत्सहते यदा ॥
तदेदं परिकर्मादौ कृत्वा ध्यायतु धीरधीः ॥
शून्यागारे गुहाया च दिवा वा यदि वा निशि ॥
स्त्रीपशुक्लीबजीवाना क्षुद्राणामप्यगोचरे ॥
अन्यत्र वा क्वचिद्देशे प्रशस्ते प्रासुके समे ॥
चेतनाचेतनाशेषध्यानविघ्नविवर्जिते ॥
भूतले वा शिलापट्टे सुखासीनः स्थितोऽथवा ॥
सममृज्वायतं गात्रं निष्कंपावयव दधत् ॥
नासाग्रन्यस्तनिःस्पंदलोचनो मंदमुच्छ्वसन् ॥
द्वात्रिंशद्दोषनिर्मुक्तकायोत्सर्गव्यवस्थित· ॥
प्रत्याहृत्याक्षलुंटाकास्तदर्थेभ्य· प्रयत्नत· ॥
चिंता चाकृष्य सर्वेभ्यो निरुध्य ध्येयवस्तुनि ॥
निरस्तनिद्रो निर्भीतिर्निरालस्यो निरंतर ॥
स्वरूप पररूप वा ध्यायेदंतर्विशुद्धये ॥
किंच—देहावस्था पुनर्यैव न स्याद्ध्यानोपरोधिनी ॥
तदवस्थो मुनिर्ध्यायेत्स्थित्वासित्वाधिशय्य वा ॥
देशादिनियमोऽप्येवं प्रायो वृत्तिव्युपाश्रय· ॥
कृतात्मना तु सर्वोपि देशादिर्ध्यानसिद्धये ॥

अर्थ—विषयोंसे इंद्रियां और मनको हटाना चाहिये अर्थात् इंद्रियोंका उपयोग और मनका उपयोग बाह्य पदार्थमें रागद्वेषमें प्रवृत्त होता है उनको रागद्वेषरहित होकर वहांसे हटाना चाहिये और वीर्यांतरायकर्मके क्षयोपशयसामर्थ्यसे मनोयोगको अपने आत्मामें स्थिर करना चाहिये.

---

कृतमनोनिरोध किं करोतीत्याशंकयाह—

एयग्गेण मणं रुंभिऊण धम्मं चउव्विहं झादि ॥
आणापायविवागं विचयं संठाणविचयं च ॥ १७०८ ॥

ध्यायत्येकाग्रचेतस्को धर्म्यध्यानं चतुर्विधम् ॥
आज्ञापायविपाकानां संस्थाया विचयं सुधीः ॥ १७७५ ॥

विजयोदया—एयग्गेण एकध्येयमुखतया। मण रुंभिदूण मनो निरुध्य। धम्मं धर्म्यवस्तुस्वभाव। चदुव्विहं चतुर्विकल्पं। झादि ध्यायति। अभ्यंतरपरिकरोयमुक्त सूत्रकारेण। बाह्य परिकर उच्यते। पर्वतगुहाया, गिरिकंदरे, दर्यां, तरुकोटरे, नदीपुलिने, पितृवने, जीर्णोद्याने, शून्यागारे वा व्यालमृगाणा पशूना, पक्षिणा, मनुष्याणा वा ध्यानविघ्नकारिणा सन्निधानशून्ये, तत्रस्थैरागतुभिश्च जीवैर्वर्जिते, उष्णशीतातपवातादिविरहिते, निरस्तेंद्रियमनोविक्षेपहेतौ, शुचावनुकूलस्पर्शे भूभागे मद मद प्राणापानविचार.नाभेरूर्ध्वं हृदि ललाटेन्यत्र वा मनोवृत्तिं यथापरिचयं प्रणिद्धातीति बाह्यपरिकर। आणापायविपाकविचये आज्ञाविचयमपायविचयं, विपाकविचय, संठाणविचय च सस्थानविचयं च। तत्राज्ञाविचयो निरूप्यते— कर्माणि मूलोत्तरप्रकृतीनि तेषा चतुर्विधो बंधपर्याय उदयफलविकल्प जीवद्रव्यं मुक्त्यवस्थेत्येवमादीनामतींद्रियत्वात् श्रुतज्ञानावरणक्षयोपशमप्रकर्षाभावात् बुद्ध्यतिशये असति दुरवबोधं यदि नाम वस्तुतत्व तथापि सर्वज्ञज्ञानप्रामाण्यान् आगमविषयतत्वं तथैव नान्यथेति निश्चय सम्यग्दर्शनस्वभावत्वान्मोक्षहेतुरित्याज्ञाविचारनिश्चयज्ञानं आज्ञाविचयाख्यं धर्मध्यानं। अन्ये तु वदंति स्वयमधिगतपदार्थतत्वस्य परं प्रतिपादयितुं सिद्धातनिरूपितार्थप्रतिपत्तिहेतुभूतयुक्तिगवेषणावहितचित्ता सर्वज्ञज्ञानप्रकाशनपरा अनया युक्त्या इयं सर्वविदामाज्ञावबोधयितुं शक्येति प्रवर्तमानत्वादाज्ञाविचय इत्युच्यत इति ॥ अनादौ संसारे स्वैरं मनोवाक्कायवृत्तेर्मम अशुभमनोवाक्कायस्याऽपाय. कथ स्यादिति अपाये विचयो मीमासास्मिन्नस्तीत्यपायविचयं द्वितीयं धर्मध्यानं। जात्यधसंस्थानीया मिथ्यादृष्टय समीचीनमुक्तिमार्गापरिज्ञानात् दूरमेवापयति मार्गादिति सन्मार्गापाये प्राणिनां विचयो विचारो यस्मिंस्तदपायविचयं इत्युच्यत इति मिथ्यादर्शनज्ञानचारित्रेभ्य कथमिमे प्राणिनोऽपेयुरिति स्मृतिसमन्वाहारोऽपायविचय ॥ विपाकविचय उच्यते—समूलोत्तरप्रकृतीना कर्मणामष्टप्रकाराणा चतुर्विधबंधपर्यायाणां मधुरकटुकविपाकानां तीव्रमध्यमदंपरिणामप्रपचकृतानुभावविशेषाणा द्रव्यक्षेत्रकालभावापेक्षाणा एतासु गतिषु योनिषु वा इत्थंभूतं फलमिति विपाके कर्मफले विचयो विचारोऽस्मिन्निति विपाकविचय' ॥ वेत्रासनझल्लरीमृदंगसस्थानो लोक इति लोकत्रयसंस्थाने विचयोऽस्मिन्निति संस्थानविचयता ॥

एवं कृतपरिकर्मा मुमुक्षु' किं करोतीत्यात्राह—

मूलारा—एयग्गेण एकध्येयमुखतया। रुंभिऊण निरुध्य। आणेत्यादि आज्ञादिषु विचयः सम्यग्विचारणानिष्ट

ज्ञानं यस्मिन्नस्ति तदाज्ञाविचयमपायविचय, विपाकविचय, सस्थानविचयं चेति चतुर्विधं धर्मध्यान मुमुक्षुः प्रणिधत्ते। तद्यथा—

उपदेष्टुरभावान्मदबुद्धित्वात्कर्मोदयात्सूक्ष्मत्वाच्च पदार्थाना हेतुदृष्टातोपरमे सर्वज्ञप्रणीतमागम प्रमाणीकृत्य इत्थमेवेदं नान्यथा वादिनो जिना इति गहनपदार्थश्रद्धानादर्थावधारणमाज्ञाविचयः। अथवा स्वय विदितपदार्थतत्त्वस्य सत. पर प्रतिपिपादयिषोः स्वसिद्धाताविरोधेन तत्त्वसमर्थनस्तर्कनयप्रमाणयोजनपरः स्मृतिसमन्वाहारः सर्वज्ञाज्ञाप्रदर्शनार्थत्वादाज्ञाविचय इत्युच्यते ॥ जात्यंधवन्मिथ्यादृष्टयः सर्वज्ञप्रणीतमार्गाद्विमुखा मोक्षार्थिनः सन्मार्गापरिज्ञानात्सुदूरमेवापयातीति सन्मार्गापायचिंतनमपायविचयः। अथवा मिथ्यादर्शनज्ञानचारित्रेभ्य· कथं नाम इमे प्राणिनोऽपेयुरिति स्मृतिसमन्वाहारोऽपायविचयः ॥ कर्मणा ज्ञानावरणादीना द्रव्यक्षेत्रकालभवभावप्रत्ययं फलानुभव प्रति चिंताप्रबंधो विपाकविचयः ॥ त्रिलोकसस्थानस्वभावविचारणप्रणिधान संस्थानविचय· ॥ स एव संक्षेपेण धर्मध्यानभेदनिर्णयो विस्तरतस्त्वार्षोक्तं धर्म्यं यथा—

तदाज्ञापायसस्थानविपाकविचयात्मकं ॥
चतुर्विकल्पमाम्नातं ध्यानमाम्नायवेदिभिः ॥
तत्राज्ञेत्यागमः सूक्ष्मविषयः प्रणिगद्यते ॥
दृश्यानुमेयवर्ज्ये हि श्रद्धेयाशे गति· श्रुतेः ॥
जैनीं प्रमाणयन्नाज्ञा योगी योगविदांवर ॥
ध्यायेद्धर्मास्तिकायादीन्भावान्सूक्ष्मान्यथागमम् ॥
आज्ञाविचय एष स्यादपायविचय· पुनः ॥
तापत्रयादिजन्माब्धिगतापायविचिंतनम् ॥
तदपायप्रतीकारचित्रोपायानुचिंतनम् ॥
अत्रैवान्तर्गतं ध्येयमनुप्रेक्षादिलक्षणम् ॥
शुभाशुभविभक्ताना कर्मणा परिपाकतः
भवावर्तस्य वैचित्र्यमभिसंदधतो मुनेः।
विपाकविचयं धर्म्यमामनति कृतागमाः ॥

विपाकश्च द्विधाम्नातः कर्मणामाप्तसूक्तिषु ॥
यथाकालमुपायाच्च फलपक्तिर्वनस्पतेः ॥
यथा तथैव कर्मापि फलं दत्ते शुभाशुभं ॥
मूलोत्तरप्रकृत्यादिबंधसत्वाद्युपाश्रयः ॥
कर्मणामुदयश्चित्रः प्राप्य द्रव्यादिसन्निधिं ॥
यतश्च तद्विपाकज्ञस्तदपायाय चेष्टते ॥
ततो ध्येयमिदं ध्यानं मुक्त्युपायो मुमुक्षुभिः ॥
संस्थानविचयं प्राहुर्लोकाकारानुचिंतनम् ॥
तदन्तर्भूतजीवादितत्वान्वीक्षणलक्षणम् ॥
द्वीपाब्धिवलयानद्रीन्सरितश्च सरांसि च ॥
विमानभवनव्यंतरावासनरकक्षितीः ॥
त्रिजगत्सन्निवेशेन सममेतान्यथागमम् ॥
भावान्मुनिरनुध्यायेत्संस्थानविचयोपगः ॥
जीवभेदांश्च तत्रत्यान्ध्यायेन्मुक्तेतरात्मकान् ॥
ज्ञातृकर्तृत्वभोक्तृत्वद्रष्टृत्वादींश्च तद्गुणान् ॥
तेषां स्वकृतकर्मानुभावोत्थमतिदुस्तरं ॥
भवाब्धिमस्मनावर्तं दोषयादःकुलाकुलं ॥
सज्ज्ञाननावा मतार्यमतार्यं प्रविकात्मभिः ॥
अपारमतिगंभीरं ध्यायेदध्यात्मविद्यति ॥
किमत्र बहुनोक्तेन सर्वोप्यागमविस्तरं ॥
नयभंगशताकीर्णो ध्येयोऽध्यात्मविशुद्धये ॥
त्वप्रमत्तनालय स्थितिमान्तर्मुहूर्तिकीम् ॥

दधानमप्रमत्तेषु परां कोटिमधिष्ठितम ॥
सद्दृष्टिषु यथाम्नायं शेषेष्वपि कृतस्थितिः ॥
प्रकृष्टशुद्धिमल्लेश्यात्रयोपोद्बलबृंहितम् ॥
क्षायोपशमिकं भाव स्वमात्कृत्य विजृंभिन ॥
मोहोदर्के महाप्राज्ञैर्महर्षिभिरुपासितं ॥
वस्तुधर्मानुयायित्वात्प्राप्तान्वर्थनिरुक्तिकम् ॥
धर्म्यं ध्यानमनुध्येय यथोक्तध्येयविस्तर ॥
प्रसिद्धचित्तता धर्मसंवेग· शुभयोगता ॥
सुश्रुतत्व समाधानमाज्ञाविगमजा रुचि· ॥
भवन्त्येतानि लिंगानि धर्म्यस्यातर्गतानि वै ॥
अनुप्रेक्षाश्च पूर्वोक्ता विवि ा शुभभावनाः ॥
वाह्य हि लिंगमगाना सन्निवेश· पुरोदित· ॥
प्रसन्नवक्त्रता सौम्या दृष्टिश्चेत्यादिलक्षणं ॥
फल ध्यानवरस्यास्य विपुला निर्जरैनसा ॥
शुभकर्मोदयोद्भूत सुख च विबुधेशिना ॥
स्वर्गापवर्गसंप्राप्ति फलमस्य प्रचक्षते ॥
साक्षात्स्वर्गपरिप्राप्ति पारंपर्यात्पर पदं ॥
ध्यानेऽप्युपरते धीमानभीक्ष्ण भावयेन्मुनिः ॥
सानुप्रेक्षाः शुभोदर्का भवाभावाय भावनाः ॥ इति ॥
व्याख्यातार्थसुखस्मृत्यर्थं चेय गीतिरंतश्चिन्त्या—
ध्यानस्य लक्ष्मभिर्निर्वचोधिपतिदेशकालफलभावाः ॥
स्थान प्रभेदनामार्थनिर्णयो गोचरो वलाधानम् ॥

मनका निरोध करनेके अनंतर ध्याताका कर्तव्य बताते हैं.

अर्थ—एक विषयके तरफ मनको निश्चल कर चार प्रकारके वस्तु स्वभावोंका जो एकाग्र ध्यान करना है. यहांतक ध्यानका अभ्यंतर परिकर कहा है. अब बाह्य परिकरका वर्णन आचार्य करते हैं पर्वतकी गुफा, कंदरा, दरी, वृक्षका कोटर, नदीका रेतीला किनारा, श्मशान, जीर्ण बगीचा, शून्य मकान ऐसे स्थानोंमें तथा दुष्ट पशु गाय, बैल, हरिण वगैरे भद्र प्राणी, पक्षी और मनुष्य जिनमें ध्यानमें विघ्न आता है ऐसे प्राणियोंसे वर्जित स्थानमें ध्यान करना चाहिये. जहां ध्यान करना हो वह स्थान आगंतुक कृमिकीटादिकोंसे रहित होना चाहिये, उष्ण, शीत, जोरदार वायु और धूप इत्यादि ध्यानमें विघ्न उत्पन्न करनेवालो आपत्तियोंसे रहित ऐसे स्थानमें ध्यान करना चाहिये. जो स्थान इन्द्रिय और मनमें विकार उत्पन्न करेगा उसका त्याग करना चाहिये. पवित्र, अनुकूल, स्पर्शयुक्त ऐसा भूप्रदेश ध्यानयोग्य है. ऐसे प्रदेशमें जाकर पद्मासनसे बैठकर श्वासोच्छ्वास धीरे धीरे करना चाहिये. नाभिके ऊपर, हृदयमें, ललाटपट्टमें अथवा अन्य स्थानमें अपनी मनोवृत्तीको यथास्थान एकाग्र करना चाहिये. यह सब ध्यानकी बाह्य सामग्री है.

धर्मध्यानके आज्ञाविचय, अपायविचय, विपाकविचय और संस्थानविचय ऐसे चार भेद हैं. प्रथम आज्ञाविचयका वर्णन करते हैं—कर्मके मूल कर्म और उत्तर कर्म ऐसे बहुत भेद हैं. इन कर्मोंके प्रकृतिबंध, स्थितिबंध, अनुभाग बंध और प्रदेशबंध ऐसे पर्याय हैं. इन कर्मोंका उदय होना, फल मिलना ऐसे अनेक प्रकार हैं. जीवद्रव्यके मुक्त्यवस्था वगैरह पर्याय होते हैं. ये सब अतीन्द्रिय हैं. ज्ञानावरणकर्मका विशिष्ट क्षयोपशम नहीं होनेसे मंद बुद्धिके द्वारा इन पदार्थोंका निश्चय नहीं होता है. यद्यपि उपर्युक्त पदार्थोंका स्वरूप हमसे नहीं जाना जाता है तथापि सर्वज्ञका ज्ञान प्रमाण है और उपर्युक्त पदार्थ उसने कहे हुए आगमके विषय हैं, जैसा जिनेश्वरने इन वस्तुओंका स्वरूप कहा है वह सब सत्य ही है असत्य नहीं है ऐसा निश्चय करना यह निश्चय सम्यग्दर्शनका स्वभाव होनेसे मुक्तिका कारण है. इस प्रकार प्रभूके आज्ञाका विचार करना, निश्चय करना उसको आज्ञा विचय कहते हैं. यह आज्ञाविचय नामक धर्मध्यान है.

अन्य आचार्य इसी आज्ञाविचय धर्मध्यानका स्वरूप इसप्रकार से भी कहते हैं— स्वयं तो पदार्थोंका स्वरूप जानता है, सिद्धान्तमें कहे हुए जीवादि तत्त्वोंका ज्ञान करा देने वाली सत्ययुक्तीका

अन्वेषण करने वाली, सर्वज्ञकी आज्ञाको प्रगट करनेवाली ऐसी तर्कशक्तिके द्वारा मैं भव्यजीवोंको जिनप्रतिपादित तत्वोंका स्वरूप कह सकूंगा ऐसा तत्त्वस्वरूप जाननेवालेके मनमें जो वार वार विचार उत्पन्न होना यह भी आज्ञाविचय नामक धर्मध्यान है.

मैं अनादिकालसे इस घोर ससारमें भ्रमण कर रहा हू, मेरे मनवचन और कायकी प्रवृत्ति स्वछदसे होती है. इस अशुभ मन वचन काय योगसे मैं किस उपायसे अलग हो सकूंगा ऐसी अपायमें वार वार स्मृति होना यह अपायविचय नामक धर्मध्यान है

मिथ्यादृष्टि लोक जन्मांध मनुष्यके समान हैं. उनको सत्य मोक्षमार्गका ज्ञान नहीं है इसलिए सन्मार्गसे वे बहुत दूर जारहे हैं. ऐसा उनके विषयमें वार वार विचार उत्पन्न होना इसको भी अपायविचय कहते हैं ये मिथ्या दृष्टि लोक मिथ्यादर्शन, मिथ्याज्ञान और मिथ्याचारित्र से कैसे अलग होंगे ऐसा वार वार मनमें चिंता होना यह भी अपायविचय ध्यान है

कर्मके मूल भेद आठ हैं. उत्तरभेद एक सौ अठ्ठचालीस हैं इन कर्मोंके प्रकृति बंधादिक चार भेद होते हैं. इनका मधुर और कटुक ऐसा फल मिलता है. आत्मामें तीव्र, मद, मध्यम रूप अनुभवबंध उत्पन्न होता है द्रव्य, क्षेत्र, काल और भावकी अपेक्षासे इन कर्मोंमें विशेपता उत्पन्न होती है विशिष्ट गतिमें और विशिष्ट योनिओंमें विशिष्ट कर्मका फलानुभव जीवको प्राप्त होता है. इस प्रकार विपाकका अर्थात् कर्मफलका वार वार विचार जिसमे उत्पन्न होता है उस ध्यानको विपाकविचय ध्यान कहते हैं

वेतका आसन, झल्लरी और मृदगके समान तीन लोकका आकार है ऐसा विचार करना संस्थानविचय नामक धर्मध्यान है ।

---

धर्म्मध्यानस्य लक्षण निर्दिशति—

धम्मस्स लक्खण से अज्जवलहुगत्तमद्दवोवसमा ॥
उवदेसणा य सुत्ते णिसग्गजाओ रुचीओ दे ॥ १७०९ ॥

मार्दवार्जवनै·संग्यहेयोपादेयपाटवं ॥
ज्ञेयं प्रवर्तमानस्य धर्म्यध्यानस्य लक्षणं ॥ १७७६ ॥

विजयोदया—धम्मस्स लक्खणं से,से तस्य। धम्मस्स धर्मस्य ध्यानस्य । लक्खणं लक्षणं। लक्ष्यते धर्म्यं ध्यानं येन तल्लक्षणं । अज्जवलहुगत्तमद्दवमुवदेसा आकृष्टातद्वयरज्जुवत्तनुवक्रकुटिलताविरह आर्जवं। लघुगत्त लघुता निस्संगता जात्याद्यष्टविधाभिमानाभावो मार्दव । उपेत्य जिनमत देशन कथनमुपदेश. हितोपदेश इति यावत् ॥ आर्जवादिभि. कार्यैर्लक्ष्यते धर्म्यध्यानमिति आर्जवादिक लक्षण। न ह्यार्तरौद्रे आर्जवादिकं संपादयत' यदार्जवादिकं परिणाममात्मन करोति तद्धर्म्यध्यानमिति लक्षणभाव अथवा आर्जवादिपरिणामसद्भाव एव धर्म्यध्यानं प्रवर्तते नासत्यार्जवादौ । नहि मानमायालोभकपायाविष्टो धर्मे प्रवर्तते, तेनार्जवादिकं कारण तेन लक्ष्यते धर्म्यमिति लक्षणतार्जवादीनाम् ॥

धर्मध्यानलिंगमवगमयति—

मूलारा—लक्खण लक्ष्यते धर्म्मध्यानं येन कार्यभूतेन कारणभूतेन वा आर्जवादिना तत्तस्य चिन्हं । दे ते । प्रसिद्धाः । लहुगत्त निःसंगत्वं । उवदेसणा य सुत्ते जिनमतोपदेशं। च निसग्गजा स्वभावोत्था। अन्ये तु उवदेसणो सुत्ते इति पठित्वा उपदेशे आज्ञायां तत्रैव रुचय इत्यर्थमाहु ॥

धर्मध्यानका लक्षण—

अर्थ—जिससे धर्मध्यानका परिज्ञान होता है वह धर्मध्यानका लक्षण समझना चाहिए आर्जव, लघुत्व, मार्दव, और उपदेश ये इसके लक्षण हैं. डोरीके दोनों छोर पकडकर खीचनेसे वह सीधी होती है, उसमें वक्रता नहीं रहती है वैसे कुटिलता अर्थात् कपटका अभाव होना यह आर्जव नामक स्वभाव है. निःसंगता अर्थात् निर्लोभी स्वभावको लघुत्व कहते हैं. जातिका गर्व, कुलगर्व इत्यादि आठ प्रकारके गर्वोंका अभाव होना इसको मार्दव कहते हैं. इन गुणोंसे युक्त होकर उपदेश करना यह उपदेश नामक गुण है इसको हितोपदेश भी कहते हैं आर्जवादिक कार्योंको देखकर धर्मध्यानको जान सकते हैं अत' आर्जवादिक धर्मध्यानका लक्षण माने गए हैं. आर्तध्यान ओर रौद्र ध्यानोंसे आर्जवादिक गुणोंकी प्राप्ति नहीं होती है. जो आर्जवादिकपरिणाम आत्मा में उत्पन्न करता है उसको धर्मध्यान कहते हैं. अथवा आर्जवादिक परिणाम होने परही धर्मध्यान उत्पन्न होता है उनके अभावमें नहीं उत्पन्न होता है. मान, माया, लोभादिकपायपरिणत मनुष्य धर्ममें प्रवृत्त नहीं होता है इसलिये आर्जवादिक धर्मध्यानके कारण हैं अत' धर्मध्यान और आर्जवादिक इनमें लक्ष्यलक्षणभाव सिद्ध होता है

आलंबणं च वायण पुच्छण परिवट्टणाणुपेहाओ ॥
धम्मस्स तेण अविसुद्धाओ सव्वाणुपेहाओ ॥ १७१० ॥

वाचनाप्रच्छनाम्नायानुप्रेक्षाधर्मदेशना· ॥
भवत्यालंबनं साधोर्धर्म्यध्यानं चिकीर्षत· ॥ १७७७ ॥

विजयोदया—आलंबनप्रतिपादनायोत्तरगाथा । आलंबणं च आश्रयश्च कस्स धम्मस्स धर्मध्यानस्य, वायण पुच्छण परिवट्टणाणुपेहाउ, वाचना प्रश्न परिवर्तनमनुप्रेक्षेति स्वाध्यायविकल्पा । वाचनादिस्वाध्यायाभावे वस्तुयाथात्म्यज्ञानमेव नास्तीति ध्यानाभाव । सति स्वाध्याये भवति ज्ञान विचल ध्यानसंज्ञितमित्यालंबनता स्वाध्यायस्य । तेण तेन धर्मेण ध्यानेनाविरुद्धासव्वाणुपेहाउ, सर्वानुप्रेक्षा एकदैकत्राश्रये वृत्तेरविरोध । अनित्यतादिवस्तुस्वभावानुप्रेक्षणमनुप्रेक्षासावालंबनं ध्यानमिति । एतेनानुप्रेक्षाया ध्यानेऽन्त पातित्वमाचक्षाणेनानुप्रेक्षोपन्यासे बीजाधान कृतम् ॥

धर्म्मस्याश्रयमाह—

मूलारा—आलंबण वाचनादिस्वाध्यायाभावे वस्तुयाथात्म्यज्ञानमेव नास्तीति ध्यानाभावः । सति स्वाध्याये भवति ज्ञानमविचलं ध्यानसंज्ञितमित्यालम्बनता वाचनादेर्धर्म्मं प्रति । परियट्टण पाठगुणनं । अणुपेहा . अर्थचिंतन । तेण- धर्म्मेण । अविरुद्धाओ अनित्यत्वादिवस्तुस्वभावानुप्रेक्षणमाश्रित्य तत्प्रवृत्तेस्तदालंबनमनित्याद्यनुप्रेक्षाः संप्रेक्ष्याः ॥

धर्मध्यानके आधारभूत कारण—

अर्थ—वाचना, प्रच्छना, अनुप्रेक्षा, आम्नाय और परिवर्तन ये स्वाध्यायके भेद हैं ये भेद धर्मध्यानके आधार भी हैं वाचनादिक स्वाध्यायके अभावमें वस्तुका यथार्थ ज्ञान ही नहीं होता है. ज्ञानके अभावमें धर्मध्यान नही होता है अतः स्वाध्याय धर्मका अवलंबन हैं. स्वाध्यायसे जो निश्चलज्ञान प्राप्त होता है उसको ध्यान कहते हैं. इस धर्मध्यानके साथ अनुप्रेक्षाओंका अविरोध है. वस्तुके अनित्यादिधर्मोंका बार २ विचार करना यह अनुप्रेक्षाका लक्षण है ये अनुप्रेक्षाए ध्यानके लिये आधार हैं इसलिये ध्यानमें इनका अन्तर्भाव होता है. इसीलिये ग्रंथकार आगे अनुप्रेक्षाओंका सविस्तर वर्णन करेंगे.

---

पूर्वोक्तान् धर्मस्य चतुरो भेदान् व्याचष्टे चतसृभिर्गाथाभि । तत्राज्ञाविचयं निरूपयति—

पंचेव अत्थिकाया छज्जीवणिकाए दव्वमण्णे य ॥
आणागज्झे भावे आणाविचएण विचिणादि ॥ १७११ ॥

पंचास्तिकायषट्कायकालद्रव्याणि यत्नतः ॥
आज्ञाग्राह्याणि दक्षेण विचार्याणि जिनाज्ञया ॥ १७७८ ॥

विजयोदया—पचेव अत्थिकाया पंचास्तिकाया जीवा पुद्गलधर्मास्तिकाया अधर्मास्तिकाया आकाशमिति तान् छज्जीवणिकायो षड्जीवनिकायान् कालदव्व कालाख्यं। अण्णे य अन्यांश्च कर्मबंधमोक्षादीन्। आणागेज्झे भावे सर्वज्ञाज्ञयागम्यान्भावान् । आणाविचयेण आज्ञाविचयाख्येन धर्मध्यानेन विचिणादि विचारयति। सर्वविद्भिरपास्तरागद्वेषैः परमकारुणिकै यथामीति निरूपितास्ते तथैवेति चिंताप्रबंध आज्ञाविचय यावत्। आणापायविवागविचये इत्यस्मिन्पाठे अपायविचयो नाम धर्मध्यानमिति गाथापूर्वार्धेन व्याचष्टे ।

आज्ञाविचयादीन्क्रमेण व्याचष्टे—

मूलारा—पंचत्थिकाय जीवपुद्गलधर्माधर्माकाशान् ॥ जीवणिकाये पृथिव्यप्तेजोवायुवनस्पतित्रसान् अण्णे बंध मोक्षादीन्। आणागब्भे सर्वज्ञाज्ञागम्यान् । विचिणादि विचारयति । सर्वविद्भिरपास्तरागद्वेषैः परमकारुणिकैर्यथामी निरूपितास्तथैवेति प्रवचेन चिंतयतीत्यर्थः ॥

आज्ञाविचय धर्मध्यानका वर्णन—

अर्थ—जीवद्रव्य, पुद्गलद्रव्य, धर्मद्रव्य, अधर्मद्रव्य और आकाशद्रव्य इनको पंचास्तिकाय कहते हैं. पृथिवी, जल, वायु, अग्नि और वनस्पति ये पांच स्थावर जीव हैं तथा द्वींद्रियसे लेकर पचेंद्रिय तक जीवोंको त्रस कहते हैं इनको आगममें षट्काय सज्ञा है कालद्रव्य, कर्मबंध, मोक्ष वगैरह अनेक पदार्थोंका स्वरूप सर्वज्ञ जिनेश्वर प्रणीत आगमसे जाना जाता है. इन तत्वोंका स्वरूप आज्ञाविचय नामक ध्यानसे ध्याता वार २ स्मृतिमें लाता है जिनके रागद्वेष नष्ट हुए हैं, ऐसे परमदयालु श्री जिनेश्वरनें जैसे इन तत्वोंका स्वरूप कहा है वैसाही उनका स्वरूप है ऐसा वार २ स्मरण करना इसको आज्ञाविचयनामक धर्मध्यान कहते हैं

---

कल्लाणपावगाणउपाये विचिणादि जिणसदमुवेच्च ॥
विचिणादि वा अवाए जीवाण सुभे य असुभे य ॥ १७१२ ॥
कल्याणप्रापकोपायश्चिंतनीयो जिनागमे ॥
शुभाशुभविकल्पानामपायः कर्मणां परम् ॥ १७७९ ॥

विजयोदया—कल्लाणपावगाण उपाये तीर्थकरपददायकाना दर्शनविशुध्यादीनामुपायान् नि शकादीन् विचिनोति जिनमत जिनकथित उपदेश। विचिणादि वा अपाये जीवाण सुभे य असुभे य जीवाना शुभाशुभकर्मविपयानपायान् तान्विचारयति पतदुक्त भवति । शुभाशुभकर्मण कथमपायो भवति जीवस्य इति चिंताप्रवाहोऽपायविचयो नाम स्पष्टार्थोत्तरगाथा।

अपायविचयं तदन्तर्गतोपायविचयपुरःसरं व्याचष्टे—

मूलारा—कल्लाणपावगाणमुवाए कल्याणानामभ्युदयनिःश्रेयससुखाना प्रापकाणि संपादकानि सम्यग्दर्शनादीनि ते पामुपायान्साधनानि द्रव्यक्षेत्रादीनि । जिणमदमुवेच्च जिनमतमाश्रित्य । सुहे शुभकर्मविपयान । शुभाशुभकर्मभ्यः कथमपायो जीवाना भवेदित्यपायविचयं ध्यायतीत्यर्थः । श्रीविजयाचार्योऽत्र आणापायविवागविचयो नाम धर्मध्यान आणापाय इत्यस्मिन्पाठे त्वपायविचयो नामेति व्याख्यत् ॥

अर्थ—अभ्युदय अर्थात् इहलोकके सुख निःश्रेयस-मोक्षसुखकी प्राप्ति करा देने वाले दर्शनविशुद्ध्यादिक सोलह कारण अर्थात् सोलह भावना तीर्थंकर पदकी प्राप्ति कर देते हैं ऐसा जिनागमका उपदेश है इस उपदेशका वारंवार स्मरण करना इसको उपाय विचय धर्मध्यान कहते हैं द्रव्य, क्षेत्रादिकोंका आश्रय लेकर शुभ कर्म विषयक और अशुभकर्मविपयक अपायोंको जीव प्राप्त होता है ऐसा वारवार विचार करना इसको अपायविचय नामक धर्मध्यान भी कहते हैं

---

एयाणेयभवगदं जीवाणं पुण्णपावकम्मफलं ॥
उदओदीरणसंकमबंधे मोक्खं च विचिणादि ॥ १७१३ ॥
अहतिरियउड्ढलोए विचिणादि सपज्जए ससंठाणे ॥
एत्थे व अणुगदाओ अणुपेहाओ वि विचिणादि ॥ १७१४ ॥

एकानेकभवोपात्तपुण्यपापात्मकर्मणाम् ॥
उदयोदीरणादीनि चिंतनीयानि धीमताम् ॥ १७८० ॥
ऊर्ध्वाधः सत्रिलोकस्था द्रव्यपर्यायसंस्थितीः ॥
विचिंतयत्यनुप्रेक्षास्तत्रैवानुगतो यतिः ॥ १७८१ ॥

विजयोदया— अहतिरियउड्ढलोए ऊर्ध्वाधस्तिर्यग्लोकान्। विचिणादि विचारयति। कीदृग्भूतान्। सपज्जए सपर्ययान् संस्थानसहितान् सपर्यायं सत्रिभुवन सस्थानविचारविचयाख्यं धर्मध्यानं। एत्थेव अत्रैव। अणुगदाओ अनुगता। अणुपेक्खाओ वि अनुप्रेक्षा अपि। विचिणादि विचारयति। अनित्यत्वादिस्वभावविचारं करोति धर्मध्याने इति कथित भवति ॥

विपाकविचयं व्याचष्टे—

मूलारा—उदयक्रमेण कर्मणोऽनुभवन। उदीरण अक्रमेण कर्मणा भुक्ति। उक्त च—

कर्मणा फलदातृत्व द्रव्यक्षेत्राणि योगतः ॥
उदयं पाकजं ज्ञेयमुदीरणमपाकजम् ॥
समुदीर्यानुदीर्णाना स्वल्पीकृत्य स्थितिं वलात् ॥
कर्मणामुदयावल्यां प्रक्षेपणमुदीरण ॥
सक्रमः प्रकृते सजातीयप्रकृतिस्वरूपेण परिणमनम् ॥

संस्थानविचयं निर्दिशति –

मूलारा—सपज्जए सभेदान्। ससंठाण वेत्रासनझल्लरीमृदंगसमानाकारसहितान्। एत्थेव अत्रैव धर्म्यध्याने। अणुगदाओ तत्साधकतममनोनिर्जयागत्वेन सवद्धा। तदुक्तम्—

सचिंतयन्ननुप्रेक्षा स्वाध्याये नित्यमुद्यतः ॥
जयत्येव मनःसाधुरिन्द्रियार्थपराङ्मुखः ॥

अर्थ—जीवोंको पुण्य और पाप कर्मका फलानुभवन संसारमें करना पडता है इन कर्मका उदय, उदीरणा संक्रम, बंध और मोक्षका वारवार विचार करना उसको विपाकविचय कहते हैं. द्रव्यक्षेत्रादिके आश्रयसे कर्मका योग्य कालमें आत्माको फल मिल जाना उदय कहा जाता है. और उदयमें आनेका जो निश्चित काल था उसके पूर्व ही कर्म अपना फल जीवको देता है उसको उदीरणा कहते हैं. एक कर्मप्रकृति सजातीय कर्म के स्वरूपसे परिणत होना सक्रमण कहते हैं. आत्माके प्रत्येक प्रदेश पर अनंतानंत कर्म आकर दूध और पानीके समान आत्म प्रदेशसे मिल जाना बंध है और संपूर्ण कर्म आत्मासे अलग होकर आत्मा पूर्ण शुद्ध स्वरूपधारक होता है वह मोक्ष है इस प्रकार वार २ विचार करना विपाकविचय है.

अर्थ—यह जगत् अधोलोक, मध्य लोक व ऊर्ध्वलोक ऐसा तीन प्रकारका है. वेत्रासन, झल्लरी और मृदंगके समान क्रमसे तीन लोकोंका आकार हैं इनका वार वार विचार करना संस्थानविचय नामक धर्मध्यान है इन ही धर्मध्यानोंमें अनुप्रेक्षाओंका भी अन्तर्भाव हैं.

---

कास्ता अनुप्रेक्षा इत्याशकायामध्रुवादीरनुप्रेक्षा निरूपयत्युत्तरप्रबंधेन—

अद्धुवमसरणमेगत्तमण्णसंसारलोयमसुइत्तं ॥
आसवसंवरणिज्जर धम्म बोधि च चिंतिज्ज ॥ १७१५ ॥
लोगो विलीयदि इमो फेणोव्व सदेवमाणुसतिरिक्खो ॥
रिद्धीओ सव्वाओ सिविणयसदंसणसमाओ ॥ १७१६ ॥

अध्रुवाशरणैकान्यजन्मलोकविसूचिका· ॥
आस्रव· संवरश्चिन्त्यो निर्जराधर्मबोधयः ॥ १७८२ ॥
डिंडीरपिंडवल्लोक· सकलोऽपि विलीयते ॥
समस्ता संपदश्चात्र स्वप्नभूतिसमागमाः ॥ १७८३ ॥

विजयोदया—लोगो विलीयदि इमो लोको विलयमुपयाति। किमिव फेणोव्व फेनवत्। सदेव माणुसतिरिक्खो देवैर्मानुषैस्तिर्यग्भिश्च समन्वित इत्यनेन लोकत्रयस्यापि निराशिताभिहिता। रिद्धीओ सव्वाओ ऋद्धय सर्वा। सुविणगदंसणसमाओ स्वप्नप्रज्ञानसमा। ननु लोगो विलीयदि इत्यनेन सर्वस्यानित्यता व्याख्याता, ऋद्ध्यादयोऽपि लोकातर्भूता इति किमर्थं भेदोपन्यास ?। अत्रोच्यते। समुदायस्यावयवात्मकस्यावयवानित्यतामन्तरेण तदनित्यता न सुखेनावगम्यत इति भिदोपन्यस्यते ॥

अनुप्रेक्षा अध्रुवादिविषयत्वेन द्वादश चिंतयेदित्याह—

मूलारा—अण्ण देहात्मनोर्भेद। असुइत्त अशुचित्त्व। एता विजयो नेच्छति। अधुनानुप्रेक्षा त्रयोदशगाथाभिरनुप्रेक्षते तत्र गाथार्द्धेन—

समुदायस्यानित्यता निरूप्योत्तरप्रबंधेन तदन्तर्गतावयवानित्यता भावयति—

मूलारा—सिविणयसदंसणसमाओ स्वप्नज्ञानसमाना· ॥

अव अध्रुवादि अनुप्रेक्षाओंका सविस्तर वर्णन करते हैं—

अर्थ—अध्रुव, अशरण एकत्व, अन्यत्व, संसार, लोक, अशुचित्व, आस्रव, सवर, निर्जरा, धर्म और वोधि ऐसे वारा अनुप्रेक्षाओंका भी चिंतन करना चाहिए

अर्थ—देव, मनुष्य और तिर्यंच सहित यह जगत् फेनके समान नष्ट होता है सव ऋद्धिया भी स्वप्नमे देखे हुए पदार्थोके समान नष्ट होती हैं शंका–सर्व लोकका नाश होता है इस कथनसे ही सर्व पदार्थोंकी अनित्यता सिद्ध हो गई अत' ऋद्धि भी लोकान्तर्भूतही हैं उनके नाशका वर्णन करनेकी क्या आवश्यकता थी? क्यों भेदरूपसे उनका वर्णन किया गया है? उत्तर—समुदाय जो कि अवयवी हैं उसकी अनित्यता अवयवकी अनित्यता दिखाये विना अवयवी भूत पदार्थोंकी अनित्यता सुखसे ध्यानमें नहीं आसकती हैं इस लिये भेदोपन्यास किया है

---

द्रव्यगतो लोभो महान् प्राणभृता तन्मूलत्वादिंद्रियसुखस्य।प्राणानप्यय त्यजति द्रव्यनिमित्तमतस्तदनित्यतामेव प्रागुपदर्शयति। निस्सगतामात्मन सपादयितु ॥

विज्जूव चंचलाइं दिट्ठपणट्ठाइं सव्वसोक्खाइ ॥
जलबुब्बुदोव्व अधुवाणि हुंति सव्वाणि ठाणाणि ॥ १७१७ ॥
दृष्टनष्टानि सौख्यानि स्फुरितानीव विद्युताम् ॥
वुद्‌वुदा इव निःशेषा नश्वराः सन्ति गोचराः ॥ १७८४ ॥

विजयोदया—विज्जूव चंचलाइ विद्युदिव चचलानि, दिट्ठपणट्ठाइं दृष्टप्रणष्टानि, सव्वसोक्खाइ सर्वाणि सुखानि अभिमतरूपादिविषयपंचकस्य प्रपचस्य सन्निधानादुपजातानि यानि मन समुत्थानि सर्वेपा वा मानवाना तिरश्चा दिवि जाना वा सुखानि सुखलपटतया जन क्लेशाशनिशातनिपातमपि सहते, तानि च नीरभरावनतसभारगभीरधीराराव-नीलनीरदोदरपरिस्फुरत्तडिल्लतेव, एतेनानित्यतादोपोत्प्रकटनेन सासारिकसुखपराङ्मुखतोपायो निगदित। जलवुब्बुदोव्व जलवुद्‌वुदवत्। अध्दुवाणि अध्रुवाणि। हौंति भवति। ठाणाणि सव्वाणि सर्वाणि स्थानानि। तिष्ठत्येतेपु जीवा इति स्थानानि। ग्रामनगरपत्तनादीनि ॥ इद मदीय स्थान अत्राह वसामीति माकृथा सकल्पं। तानि अनित्यानि नित्यवुद्ध्या परिगृहीतानि विनाशे संक्लेशशतान्यानयतीति कथित ॥ अथवा तिष्ठत्यासिन्स्वकृतविचित्रकर्मोदयात्प्राणिन इतींद्रत्व, चक्रलांछनत्व, गणाधिपतित्व वा एतानि स्थानान्यनित्यानि ॥

मूलारा—सव्वसोक्खाइ मन पष्ठचक्षुरादिविपयानुभवप्रभवानि देवमानुपतिर्यक्‌संबंधीनि वा सुखानि। ठाणाणि इंद्रत्वादिपदानि ग्रामपुरपत्तनादीनि वा ।

प्राणिओंको सबसे बडा द्रव्यहीका लोभ है द्रव्य लोभसे इंद्रिय सुख की प्राप्ति होती है द्रव्यके निमित्त प्राणोंको भी त्यागते हैं इस लिए द्रव्यकी अनित्यताका आचार्य प्रथमतः दिग्दर्शन करते हैं. इस दिग्दर्शनसे द्रव्यमें आत्मा निःसंग होता है-

अर्थ—सब प्रकारके सुख विजलीके समान दीखकर नष्ट हो जाते हैं इष्ट रूपादिक पांच प्रकारके वि- पयोंके सांनिध्यसे मनसे मनुष्य तिर्यच और देवोंके सुखमें गाणी सुखलंपट होकर लुब्ध होता है इस सुखके लिये हजारों क्लेश देनेवाली आपत्ति भी भोगनेके लिये जीव तयार होते हैं परंतु ये सुख जलसे नम्र और गंभीर गर्जना करनेवाले नलि मेघोंमें चमकनेवाली विजलीके समान चञ्चल हैं. जहां जीव निवास करता है ऐसे ग्राम, नगर, पत्तन वगैरह स्थान अध्रुव अर्थात् नाशवंत हैं यह मेरा स्थान है, मैं यहां रहता हूं ऐसा मनमें तू संकल्प करना छोडदे क्यों कि ये स्थान अनित्य है परंतु इनमें नित्यपनाका सकल्प करके स्वीकार करनेपर उनका नाश होनेसे सैंकडो संक्लेश परिणाम उत्पन्न होते हैं अथवा इस जगतमें अपने किये हुए विचित्र कर्मके उदयसे जीवोंको इंद्रप- ना, चक्रवर्तिपना, गणधरत्व ऐसे स्थानोंकी प्राप्ति होती है परंतु इन स्थानोंकी अनित्यता ही है.

---

णावागदाव बहुगइपधाविदा हुंति सव्वसंबंधी ॥
सव्वेसिमासया वि अणिच्चा जह अब्भसंघाया ॥ १७१८ ॥

नानादेशागताः पांथा नौगता इव बांधवाः ॥
गत्वरा आश्रयाःसर्वे शारदा इव नीरदाः ॥ १७८५ ॥

विजयोदया—णावागदाव जलयानपात्रारूढा इव बहुगदिपधाविदा हुति सव्वसवधी, विचित्रशुभाशुभपरि- णामोपात्तगति कर्मवशात्तदुपनीयमानदेवमानवनारकतिर्यचाख्यगतिपर्यायग्रहणाय कृतप्रयाणबंधव' सर्वेऽपि । पतेन बंधुताया अनित्यतोक्ता। उपात्तगत्यपरित्यागे बंधुता स्थिरा भवति, उपात्ता चेत् त्यक्तान्या च गृहीता पितृपुत्रादीना गत्य- तरमुपगतानामपि बंधुत्वे स्वजनपरजनविवेक एव न स्यादिति मन्यते। सव्वेसिमासया वि सर्वेपामाश्रया अपि यानाश्रित्य प्राणिनो जीवितुमुत्सहते तेप्याश्रयाः स्वामी भृत्य पुत्रो भ्रातेत्येवमादयोऽनित्या यथा अब्भसंघादा अभ्रसघा इव॥

मूलारा—णावागदाव यानपात्रारूढा इव । बहुगदिपधाविदा विचित्रशुभाशुभपरिणामोपात्तगतिकर्मवशात्तदुपनी-

यमानदेवनारकमानवतिर्यक्त्वाख्यगतिपरिणामग्रहणाय प्रभूतमार्गगमनाय च कृतप्रयाणाः । बंधवो बांधवाः । आमया यानाश्रित्य प्राणिनो जीवितुमुत्सहंते ते आश्रयाः स्वामी, भृत्य पुत्रो भ्रातेत्येवमादयः ।

अर्थ—नानाप्रकारके शुभाशुभपरिणामोंसे जिनको भिन्न २ गतिबंध हुआ है ऐसे अपने बंधुगण कर्मके वश होकर देवगति, मनुष्यगति, तिर्यंचगति और नरकगति एतत्स्वरूप पर्याय ग्रहण करने के लिये प्रयाण करते हैं इसलिये बंधुगण भी अनित्यही हैं. उनके ऊपर मोहयुक्त होना अयोग्य ही है. जिस गतिका बंध हुआ है उसको त्यागनेका सामर्थ्य इनमें यदि होता तो ये स्थिर माने जाते थे परंतु जो गति ग्रहण की थी उसको छोडकर जीव अन्य अन्य गति ग्रहण करते जाते हैं. पिता पुत्रादिक पूर्व पर्याय छोडकर अन्यगतिको प्राप्त करते हैं तो भी उनको बंधु ही माना जायगा तो ये मेरे स्वजन हैं ये परजन हैं इनका विवेक ही नहीं रहेगा

---

संवासो वि अणिच्चो पहियाणं पिण्डणं व छाहीए ॥
पीदी वि अच्छिरागोव्व अणिच्चा सव्वजीवाणं ॥ १७१९ ॥

छायानामिव पांथानां संवासो नश्वरोंऽगिनाम् ॥
चक्षुषामिव रागोऽत्र न स्नेहो जायते स्थिर ॥ १७८६ ॥

विजयोदया—संवासो वि सहावस्थानमपि बंधुभिर्मित्रैः परिजनैर्वा, अणिच्चो अनित्यः । पहियाण पिण्डण इव छाहीए नानादिग्देशागतानां पथिकानां भिन्नस्थानयायिनां मार्गोपकंठस्थितनिबिडतरुगिरिपलाशालंकारविनतशाखाकरशतनिवारितघर्मरश्मिप्रसरनकवरशीतलाविरलविपुलच्छायायां पांथानां समाज इव । पीदीवि प्रीतिरपि । अच्छिरागोव्व प्रणयकलहपांसुपातदूषितप्रियतमालुठत्पाठीनोदरधवललोचनानां राग इव अनित्या सर्वजीवानां । तथाह्यभियाचरणविपर्कणिकाप्रणयलोचनप्रलयं संविदधातीति प्राणभृतामनुभवसिद्धमेव ॥

मूलारा—संवासो बंधुमित्रपरिजनादिभिः सहावस्थानं । पथियाणं नानादिग्देशागतानां भिन्नस्थानयायिनां पांथानां । पिंडण मीलणं । छाहीए मार्गोपकंठस्थवृक्षवितानछायायां । अच्छिरागोव्व प्रणयकलहपांसुपातदूषितप्रियतमालुठत्पाठीनोदरधवललोचनगतो रागो लौहित्यं यथा ।

जिनके आश्रयसे प्राणी अपना जीवित धारण करनेमें समर्थ होते हैं वे मालिक, नोकर, पुत्र भाई वगैरह आश्रयस्थान भी बादलोंके समुदायके समान चंचल है अतः सबसे मोह त्याग करके निःसंग होना चाहिये.

अर्थ—बंधु, मित्र और परिजनोंके साथ अपना रहना भी नित्य नहीं है जैसे रास्तेमें अनेक दिशा और देशसे आये हुए पथिक भिन्न भिन्न स्थानके प्रति जानेवाले होते हैं परतु मार्गके समीपके सघन जो पलाश, खदिर वृक्षोंकी सूर्यकिरणों को निवारण करनेवाली विस्तृत, शीतल, विपुल छायामें क्षणपर्यंत बैठकर विश्रांति लेते हैं अनंतर वे भिन्न भिन्न स्थानको प्रयाण करते हैं तद्वत मित्रादिक बंधुओंका सहवासभी अनित्य है. बांधवोंकी प्रीति भी अनित्य है. प्रणयकलहरूपी धूल पडनेसे कुपित प्राणप्रिय स्त्रीके कुदनेवाली मछलीके समान सफेत आखोंमें जैसा लालपना थोडी देरतक रहता है वैसा मित्रादिक बंधुओंका सहवास भी थोडी देरके लिये है. अप्रिय आचरण रूपी विपकणसे प्रेमरूपी नेत्रका नाश होता है यह सपूर्ण प्राणिओंके अनुभवमें आई हुई बात है.

---

रत्तिं एगम्मि दुमे सउणाणं पिण्डणं व संजोगो ।
परिवेसोव्व अणिच्चो इस्सरियाणाधणारोग्गं ॥ १७२० ॥

संयोगो देहिनां वृक्षे शर्वर्यामिव पक्षिणाम् ॥
आज्ञैश्वर्यादयो भावाः परिवेषा इव स्थिराः ॥ १७८७ ॥

विजयोदया—रत्तिं रात्रौ। एगम्मि दुमे एकस्मिन् द्रुमे। सगुणाण पक्षिणा। पिण्डण व पिण्डितमिव सजोगो सयोगो यस्यामस्तद्रुमामिमुख तत्र वयं प्राप्स्यामोन्योन्यमित्यकृतसकल्पाना यथाकथचिद्न्योन्यप्राप्तिरल्पकाला तथा प्राणभृतामपि समानकालकालमारुतप्रेरितानामेकस्मिन कुलविटपिनि कतिपयदिनभावीसप्रयोग । परिवेसो व परिवेष इव। अणिच्च अनित्य । किं ? ईसरियाणाधणारोग । ऐश्वर्य प्रभुता आज्ञा धन आरोग्य च ॥

मूलारा—दुमे वृक्षे । संजोगो अकृतसंकल्पाना प्राणिना एकस्मिन्कुले अन्योन्यप्राप्तिः । परिवेसो सूर्यपरिधिः । इस्सरियाण प्रभुत्वमाज्ञा वा ॥

अर्थ—जैसे रातमें एक वृक्षपर पाक्षियोंका समुदाय आकर बैठता है हम सब मिलकर एक वृक्षपर निवास करेंगे ऐसा मनमें संकल्प कर वे वृक्षपर आकर नहीं बैठते हैं. रातमें निवासकर प्रातःकालमें वे वहांसे स्वेच्छासे गमन करते हैं वैसे प्राणीभी समान कालरूप वायुसे प्रेरित होकर एक कुलरूप वृक्षपर कुछहि कालपर्यंत आकर उत्पन्न होते हैं. जैसे सूर्यके चारो तरफ परिवेश उत्पन्न होता है परंतु वह थोडे कालतक ही टिकता है वैसे जीवोंमें आरोग्य सामर्थ्य, ऐश्वर्य थोडे दिनका है.

---

इंदियसामग्गी वि अणिच्चा संझाव होइ जीवाणं ॥
मज्झण्हं व णराणं जोव्वणमणवाट्ठिदं लोए ॥ १७२१ ॥
जीवानामक्षसामग्री शंपेवास्ति चला चलम् ॥
विनश्वरमशेषाणां मध्याह्न इव यौवनम् ॥ १७८८ ॥

विजयोदया–इंदियसामग्गीवि इंद्रियाणा सामग्र्यपि। अणिच्चा अनित्या। अधता बधिरता च दृश्यत एव। मज्झण्हं व मध्यान्हवत्, णराण जोव्वणमणवट्ठिद लोगे नराणा योवनमनवस्थित लोके यौवनोऽहमिति जन. श्लाघ्यते, योवनदर्पनिकारादेव बुध्यमानोपि धर्मे न प्रयतते तदानित्य मध्यान्हवत् ॥ क्षिप्रतरं व्यतिवर्तिनि यौवने को यौवनकृतोऽजीर्णमद स्याच्च मनस्विनाम् ॥

मूलारा—अणवट्ठिदं क्षिप्रतरगत्वर ॥

अर्थ—इंद्रियोंकी सामग्री भी इस जीवको अपूर्ण रहती है. कोई जीव अधा रहता है तो कोई जीव बहरा होता है अर्थात् संध्याकालके समान यह सामग्री अनित्य है मनुष्योंका तारुण्य अस्थिर है परंतु मनुष्य मैं तरुण हूं ऐसी स्वय प्रशसा करता है तारुण्यके अभिमानमें आकर धर्ममें तत्पर नहीं होता है परतु तारुण्य चिरकालतक नहीं रहता है वह भी मध्यान्ह कालके समान जल्दी नष्ट होता है ऐसे जल्दी नष्ट होनेवाले तारुण्यके विषयमे गर्व करना क्या बुद्धिमानोंको योग्य है? कभी भी नहीं

---

चदो हीणो व पुणो विड्ढदि एदि य उदू अदीदो वि ॥
णदु जोव्वण णियत्तइ णदीजलमदच्छिदं चेव ॥ १७२२ ॥
चंद्रमा वर्द्धते क्षीण ऋतुरेति पुनर्गतः ॥
नदीजलमिवातीतं भूयो नायाति यौवनम् ॥ १७८९ ॥

विजयोदया—चदो हीणोव पुणो वड्ढदि नित्यराहुमुखकुहरप्रवेशाद्धानिमुपगतोऽपि निशानाथ कृष्णपक्षे हीयते ॥ हीनो भवति। पुणो वड्ढदि पुन शुक्लपक्षे वर्द्धते ॥ प्रतिदिनोऽपचीयमानकाल । एदि य उदू अदीदोवि हिमशिशिर वसतादयोऽतीता अपि ऋतव पुनरायानि न तु जोव्वण णियत्तेदि नेव यौवन निवर्ततेनिक्रातम्। तस्मिन्नेव भवे नदीजल मदच्छिद चेव नदीजलमतिक्रातमिव न पुनरेति ॥ तद्वदिद यौवनमित्यनेनानित्यततातिशयो योवनस्य दर्शित ॥

मूलारा—हीणो नित्यराहुमुखकुहरप्रवेशाद्धानिं गतः । एदि य पुनरायाति च । उडु हेमतादि ऋतुर्नक्षत्र वा । णियट्टदि पुनरायाति । अदिच्छिदं अतिक्रांतं । चेव यथा ।

अर्थ—हमेशा नित्य राहु के मुखमें प्रवेश करनेसे हानिको प्राप्त होता हुआ भी अर्थात् कृष्णपक्षमें प्रति-दिन कम कम होता हुआ भी चद्र शुक्ल पक्षमें वढने लगता है अर्थात् चंद्रकी एकात रूपसे हानि ही नहीं है. उसकी वृद्धि भी है हिम, शिशिर वसतादिक ऋतु व्यतीत होनेपर भी पुनः उनका आगम होता है परंतु तारुण्य वीतनेपर पुनः लौटता नहीं है उसभवमें तारुण्यकी पुनरावृत्ति होती नही है जैसे नदीका गया हुआ पानी फिर वही नहीं आता है वैसा यह तारुण्य पुन आता नहीं है इससे तारुण्यमें अनित्यताका अतिशय है यह सिद्ध होता हैं.

---

धावदि गिरिणदिसोदव आउगं सव्वजीवलोगम्मि ॥
सुकुमालदा वि हीयदि लोगे पुव्वण्हछाही व ॥ १७२३ ॥

धावते देहिनामायुरापगानामिवोदकम् ॥
क्षिप्रं पलायते रूपं जलरूपमिवांगिनाम् ॥ १७९० ॥

विजयोदया—धावदि गिरिणदिसोदव धावति गिरिनदीप्रवाह इव । किं ? आउग आयु । सव्वजीवलोगहि सर्वस्मिन् जीवलोके । सुकुमालदा वि हीयदि सुकुमारतापि हीयते । पुव्वण्ह छाही व पूर्वाह्णछाया इव । यथा यथोद्गच्छति तामरसबधुस्तथा तथोपसंहरति छाया शरीरादीना ॥

मूलारा—पुव्वण्णछाहीव पूर्वाह्णछाया यथा । सूर्यो हि यथा यथोदेति तथा तथोपसहरति शरीरादीना छाया ॥

अर्थ—पर्वतपरसे वडवेगसे वहने वाली नदीके प्रवाहके समान प्राणियोंका आयुष्यप्रवाह शीघ्र वहकर समाप्त होता है. जैसे जैसे कमलबंधु सूर्य ऊपर आता है वैसे २ शरीरादिकोंकी छाया कम होती हैं इस सर्व जीवोंके जगतमें प्राणिओंकी कोमलता भी पूर्वाह्णकी छायाके समान कम कम होती जाती है अर्थात् प्राणिओंका सौंदर्य वृद्धावस्था आनेपर नष्ट होता है.

---

अवरण्हरुक्खछाही व अट्ठिदं वड्ढदे जरा लोगे ॥
रूवं पि णासइ लहुं जलेव लिहिदेल्लयं रूवं ॥ १७२४ ॥
पौर्वाह्निकी यथा छाया हीयते सुकुमारता ॥
पराह्निकी यथा छाया सर्वदा वर्धते जरा ॥ १७२१ ॥

विजयोदया—अवरण्हरुक्खछाहीव अपराण्हवृक्षच्छायेव । अट्ठिदं वड्ढदे अस्तित्वं वर्द्धते ॥ क्रियाविशेषणत्वान्नपुंसकता । जरा लोगे लोके । सौरूप्यपल्लवदवानलशिखा, सौभाग्यप्रसूनकरकावृष्टि , युवतिहरिणालीव्याघ्री, ज्ञानलोचनपांशुवृष्टिस्तपस्तामरसवनस्य हिमानी,दीनताया जननी, परिभवस्य धात्री, मृतेर्दूती, भीते प्रियसखी या जरा सा वर्द्धते। रूवंपि णासदि लहुं रूपमपि विलासिनीकटाक्षेक्षणशरशततूणीरायमाणं, चेतोवलक्षसूक्ष्मवसनरंजने कौसुभरसायमानं, प्रीतिलतिकाया मूलं, सौभाग्यतरुफलं, कूलं पूज्यताया यद्रूपं तल्लघु विनश्यति ॥ किमिव जलेव लिहिदेल्लग रूवं जले लिखितरूपमिव ॥

मूलारा—अट्ठिद वड्ढदे अश्रात वर्धते । लिहिदेल्लयं लिखितं ॥

अर्थ—दिवसके उत्तरार्धमें वृक्षकी छाया जेसी वढने लगती है जरा वृद्धावस्था भी प्राप्त होनेपर प्रति दिन वढने लगती है यह वृद्धावस्था सौंदर्य रूप कोमल कोंपलपर अग्नीकी ज्वालाके समान आक्रमण कर उसको जलाती है. सौभाग्यरूपी पुष्पपर ओले की वृष्टिके समान है तारुण्यरूपी हरिणपर यह व्याघ्री के समान टूट पडती है ज्ञानरूपी नेत्रपर यह धूलीवृष्टिके समान है. तपरूपी कमलवनके लिये यह वृद्धावस्था वर्फके समान है,अर्थात् वृद्धपना तपको नष्ट करता है. यह वृद्धावस्था दीनताकी माता है. अपमानकी धाय है,मृत्युकी दूती है. भय की प्रिय सहेली है. इस वृद्धावस्थाकी प्राप्ति होनेपर रूपका नाश होता है यह रूप गुणसुंदर स्त्रियोंके कटाक्ष वाणोंका आश्रयस्थान है. मनरूपी स्वच्छ वस्त्र को रगानेके लिये कुसुंवी रगके समान है. प्रीतिलताका यह मूल है सौभाग्य वृक्षका यह फल है,पूज्यताका यह किनारा है. ऐसा भी उत्तम रूप पानीमे लिखे हुए चित्रके समान शीघ्र नष्ट होता है.

---

तेओ वि इंदधणुतेजसण्णिहो होइ सव्वजीवाणं ॥
दिट्ठपणट्ठा बुद्धी वि होइ मुक्काव जीवाणं ॥ १७२५ ॥

तेजो नश्यति जीवानां निलिंपधनुपामिव ॥
उत्क्लेशनश्वरी बुद्धिर्दृष्टनष्टा प्रजायते ॥ १७९२ ॥

विजयोदया—तेजोवि इंदधणुतेजसण्णिहो शरीरस्य तेजोपि पौलोमीप्रियतमचापस्य तेज इव गर्ज्जज्जन नयनचेतःप्रमोदादायि क्षणेन क्षयमुपव्रजति ॥ दिट्ठपणट्ठा दृष्टप्रणष्टा बुद्धि सकलवस्तुयाथात्म्यावकुंठशाज्ञानतम-पटल पाटनपटीयसी, विचित्रदु खग्राहकदवकाकीर्णकुगतिविशा लनिम्नगाप्रवेशनिवारणोद्यता, चारित्रनिधिप्रकटनक्षमा-दीपवर्ति', सकलसंपदाकर्षणविद्या शिवगतिनायिकासफली एवभूता बुद्धिरप्युक्तवाशु नाशमुपयाति ॥

मूलारा—तेओ देहप्रभा । बुद्धि यथार्थप्रतिपत्तिः ।

अर्थ—मनुष्यके शरीकी कांति इद्रधनुष्यके समान क्षणपर्यंत नेत्रोंको लुभाती है परंतु क्षणके अनतर नष्ट होती है. सपूर्ण पदार्थ का यथार्थ स्वरूप दिखानेवाली, अज्ञानांधकारके समूहको नष्ट करनेवाली, अनेकदु'खरूपी मगरोंसे भरी हुई कुगतिरूप विशाल नदीमें जीवके प्रवेशको रोकनेवाली, चारित्ररूपी निधिको प्रकट करने को दीप के समान सपूर्ण सपत्तिको उत्पन्न करनेवाली, मंत्रविद्याके समान, मुक्ति लक्ष्मी के दूतिके समान ऐसी बुद्धि भी व्यभिचारिणी स्त्रीके समान मनुष्यसे विदा लेती है

---

अदिवडइ बलं खिप्पं रूवं धूलीकदंबरं छाए ॥
वीचीव अध्दुवं वीरियंपि लोगम्मि जीवाणं ॥ १७२६ ॥
वलं पलायते रूपमिव रथ्यागतं रजः ॥
जलानामिव कल्लोलो वीर्यं नश्वरमंगिनाम् ॥ १७९३ ॥

विजयोदया—अतिवडइ वल खिप्प क्षिप्रमतिपतति वल, रूव धूलीकदंवर छाए रथ्याया पांशुरचितरूपमिव ॥ वीचीव चण्डप्रभजनाभिघातोत्थापिततरलतरगमालेव, अध्दुवं अध्रुवं । वीरिय वीर्यमपि । जीवानां शरीरस्य दृढता वलं- वीर्यमात्मपरिणाम ॥

मूलारा—अदिपडदि नश्यति । धूलीकदंव रथ्याया पांसुरचित रूपमिव । वीची लहरी । अद्धुवं अध्रुवं । लोगम्मि लोके प्रसिद्ध ।

अर्थ—रास्तेमें वायुमे धूली ऊठकर उसकी वर्तुलाकृति उत्पन्न होती है. परंतु वह शीघ्र ही नष्ट होती है वैसे मनुष्यका वलभी जल्दी नष्ट होता है वडे मल्लभी क्षयरोगसे ग्रस्त होते हैं. मनुष्योंका पराक्रम भी प्रचंड हवाके

आघातोंसे उठी हुई लहरियोंकी पंक्तिके समान नष्ट हो जाता है. शरीरकी दृढता को वल कहते हैं, आत्माके अदम्य उत्साह को-धैर्य को वीर्य-पराक्रम कहते हैं

---

हिमणिचओ वि व गिहसयणासणभंडाणि होंति अधुवाणि ॥
जसकित्ती वि अणिच्चा लोए संज्झब्भरागोव्व ॥ १७२७ ॥

हिमपुजा इवानित्या भवन्ति स्वजनादय. ॥
जंतूनां गत्वरी कीर्तिः संध्याश्रीरिव सर्वथा ॥ १७९४ ॥

मूलारा—वेव इव । जसकित्ती यशःकीर्तिः । संज्झब्भ दिनातमेघः ।

अर्थ—वर्फ के समुदायके समान घर, शय्या, आसन, पात्र वगैरह पदार्थ नश्वर हैं और यशकी प्रसिद्धि भी सध्याकालीन मेघके समान नश्वर है.

---

स्पष्टोत्तरगाथा—

किह दा सत्ता कम्मवसत्ता सारदियमेहसरिसमिणं ॥
ण मुणंति जगमणिच्चं मरणभयसमुत्थिया संता ॥ १७२८ ॥

इदं जगच्छारदवारिदोपमं न जानते नश्वरमंगिनः कथम् ॥
यमेन हंतुं सकला' पुरस्कृता मृगाधिपेनेव मृगा वलीयसा ॥ १७९५ ॥
इति अध्रुवम् ॥

विजयोदया—किह कथं तावत् । अणिच्च जग ण मुणन्ति जगदनित्यं न जानाति । के सत्वादी सीदति स्वकृतपापवशात्तासु तासु योनिष्विति सत्वा. । सारदिगमेघसरिसमिणं शरदृतुसमुत्पन्न नैकवर्णविचित्रसंस्थानजीमूतमालासदृशं । मरणभयसमुच्छिदा संता मरणं विप वृपतमजीवितस्य सरीत्कृत प्रियवियोगादारकस्य, शोकाशनेर्जलदपटल, अयस्कातोपल तु खलोहाकर्पणे, वधुहृदयोपलाना द्रावकमौपधमायतापदामायतनं एवंभूतमरणभयसमुत्थिता सत ॥ एवमनित्यतामशेपवस्तुविपया ध्येयीकृत्य प्रवर्तते धर्म्यं ध्यान ॥ अध्रुव ॥

भोगार्थकर्मण्यग्राणा प्राणिना जगदनित्यत्वाज्ञान साश्चर्यमनुशोचति—

मूलारा—दा तावत् । वाक्यालंकारे । सत्ता प्राणिन· । कम्मपसत्ता कृष्यादिष्वासक्ता । सारद्ग शरत्प्रभवः । समीछिदा आच्छादिता अपि । उक्त च —

कर्मासक्ताः कथं सत्वाःशरन्मेघसमं जगत् ॥
सर्वमेतन्न जानंति मृत्युभीतियुता अपि ॥

अपिच— कथमिव दुरितज्वरणो भोगासक्ताः शरद्घनप्रतिम ॥
जानंति जगदनित्यं न जन्मिनो मरणभीतिभृत. ॥

अनित्यतानुप्रेक्षा ॥

अर्थ—ये सर्व प्राणी मृत्युभयसे युक्त होकर भी शरत्कालके मेघके समान इस विनश्वर जगत् कों क्यों नहीं जानते हैं यह बडा आश्चर्य है ये सर्व प्राणी अपने किये पापों के आधीन होकर अनेक योनियोंमें दुःख पाते रहते हैं इसलिये 'सीदंतीति सत्वाः' अर्थात् सत्व ऐसे अन्वर्थक नामको धारण करते हैं शरदृतुमें उत्पन्न हुए अनेक रंगोंको धारण करनेवाले, अनेक आकृति युक्त परतु नश्वर ऐसे मेघसमूहके समान यह जगत् नश्वर हैं. प्राणिओं को मरण विपके समान अप्रिय है शोकरूपी वज्रपातको उत्पन्न करनेवाला मानो मेघ पटल ही है, दुःखरूप लोहको खीचने के लिये मरण लोहचुंबकके समान है, बंधुओंके हृदयरूपी पत्थरको द्रवयुक्त करनेमें औषधीके समान है. यह मरण दीर्घआपत्तिओं का घर है. इस प्रकार मरणभयसे युक्त सत्पुरुष संपूर्ण विषय अनित्य धर्मसे युक्त है ऐसा समझकर उन वस्तुओंको धर्मध्यानका विषय करते हैं.

---

अशरणताकथनायोत्तरप्रबंध । कर्माण्यात्मपरिणामोपनीतचिरकालस्थितीनि सन्निहितक्षेत्रकालभावाख्य सहकारिकारणानि यदा फलमशुभ प्रयच्छति तदा तानि न निवारयितु कश्चित्समर्थोऽस्ति तेनाशरणोऽस्म्यहमिति चिंता प्रबंध कार्य इत्याचष्टे—

णासदि मदी उदिण्णे कम्मेण य तस्स दीसदि उवाओ ॥
अमदंपि विसं सच्छं तणं पि णीयं वि हुंति अरी ॥ १७२९ ॥

**कर्मोदये मतिर्याति नोपायो विद्यतेऽङ्गिनाम् ॥**
**सुधा विषं तृणं शस्त्रं बंधुः शत्रुश्च जायते ॥ १७९६ ॥**

विजयोदया—णासदि मदी नश्यति मति । उदिण्णे कम्मे उदीर्णे कर्मणि । बुद्धिर्द्विधा स्वाभाविकी आगमभवा च सा द्वयी यस्यासौ हितमवैति नेतर. ॥ उक्तं च-द्विधेह बुद्धिं प्रवदति संत स्वाभाविकीमागमसंभवा च । बुद्धिद्वयी यस्य शरीरिण स्यात् द्रष्टु हितं सोलमल न चान्य ॥१॥ स्वाभाविकी यस्य मतिर्विशुद्धा, तीर्थादवाप्तं न तु शास्त्रमस्ति द्रष्टुं हितं धर्ममसौ न शक्तो भाया विना रूपमिवाप्यनध ॥२॥ तीर्थादवाप्तं श्रुतमस्ति यस्य स्वाभाविकी नास्ति मतिर्विशुद्धा, श्रुतस्य नाप्नोति फलं स तस्य दीपस्य हस्तेऽपि सतो यथाध ॥ ३ ॥ किं दर्पणेनावृतलोचनस्य विदानभोगस्य धनेन वा किं । शस्त्रेण किं वा युधि भीरुकस्य तथैव किं मंदमते श्रुतेन ॥ ४ ॥ ईदृशी बुद्धिर्नश्यति ज्ञानावरणाख्ये कर्मण्युदयमुपागते । तच्च ज्ञानावरणं बध्नाति जतुर्ज्ञानिना ज्ञानस्य ज्ञानोपकरणाना च द्वेपान्निन्हवादुपघातात् मात्सर्याद्विघ्नकरणादासादनाद्दूपणात् ज्ञानोर्दिनिग्रहकरणादकाले पठनात् परेंद्रियोपघातकरणादर्जित, अवग्रहेहावायधारणाविकल्प मतिज्ञानं श्रुतादिकं वा नाशयति ॥ उक्तं च ॥ अवग्रहीतुं च तयेहितुं च सोवेहितुं धारयितुं च सम्यग् । नाल भवत्यर्जितवानपुण्य कर्माधमं ज्ञानवृतेर्निमित्तं ॥ १ ॥ अंधश्च पश्यन् बधिरश्च शृण्वन् जिह्वा विना सौरसतास्तघासन् । त्वगीतये सत्यपि विप्वगेव न योविशेषान्विपयेपु वेत्ति ॥ २ ॥ एकेंद्रियद्वींद्रियता भवेपु स त्रींद्रियत्वं चतुरिंद्रियत्व । तेनावृत कर्ममहावुदेन प्राप्नोति जीवो विमनस्कता च ॥ ३ ॥ द्रष्टुं हितं श्रोतुमथेहितु च कर्तुं च दातु विधिना च भोक्तु ॥ स्वकर्मणा तेन नरो वृतस्सन् न वुध्यमान पशुनैति साम्यं । ४ ॥ स्वबुद्धिमात्रामपि शक्यमाप्तु श्रेय समीपस्थमिहाप्यविद्वान् । सुदूरसंस्थं च श्रुताभिगम्य स केन विंद्यात्परलोकपथ्यं ॥५॥ महागुहाभीमतम प्रवेशात् सदाप्यगाधाभसि मज्जनाच्च । घनाच्चिर चारकरोधनाच्च स्याद्देहिन कष्टतरोऽज्ञभाव ॥ ६ ॥ तम'प्रवेशोंभसि मज्जन च स्याद् खकुच्चाऽकरोधनं च ॥ जाताविहैकत्र भवास्त्वनतानज्ञानजं दु खमनुप्रयाति ॥ ७ ॥ नालं विशाल नयन तृतीयं श्रुत च मत्यारहितो ग्रहीतुम्॥ अंधोपि यस्मिन् सति याति मार्गे क्षेमे शिवे मोक्षमहापुरस्य ॥८॥ एवंभूतामज्ञतामापादयति ज्ञानावरणं न किंचित्तन्निवारणक्षमं शरणमस्ति ॥ ण य तस्स दिस्सदि उवाउ, नैव तस्य कर्मणो निवारणे उपायो दृश्यते। असद्वेद्यस्य कर्मण उदयात् अमदंपि विस होदि अमृतमपि विप भवति । तणमपि सच्छ तृणमपि शस्त्र भवति । णीआ वि य होंति अरी बंधवोपि शत्रवो भवति ॥

एवमशेपवस्तुविपयामनित्यता ध्येयीकृत्य प्रवर्त्यमानं निर्वर्ण्य साप्रतमशरणता तद्ध्येयामापाद्यमानामष्टादशगाथाभिर्भावयितुमुपदिशति । तत्र कपायावेशवशाज्जीवेन तद्घातिकर्माणि द्रव्यक्षेत्रादिसहकारिकारणसन्निधानादुद्भूयोद्भूय कटुतरमात्मफल प्रयच्छंति न कश्चिन्निवारयितुं शक्नोति इत्यहमस्मिन्नशरणोऽस्मीति चिंताप्रबंधो विधेय इति सग्रह· —

मूलारा—मदी अवग्रहादिमतिज्ञानमाप्तोपदेशप्रभवं श्रुतं च । तद्द्वययोगादेव हि हितमहित वा जानाति नान्यथा । उक्तं च—

द्विधेह बुद्धिं प्रवदन्ति संतःस्वाभाविकीमागमसंभवां च ॥
बुद्धिद्वयी यस्य शरीरिणःस्यात् द्रष्टुं हितं सालमल च नान्यः ॥

ईदृश्यपि द्वितयी बुद्धिर्ज्ञानावरणविशेषे कर्मण्युदिते सति नश्यति । तस्स तत्ताद्दग्बुद्धिविध्वंसनोद्यतस्य कर्मणो निवारणे । उवाओ प्रतीकारो । लोके च न दृश्यते इत्यशरणं बुद्धिविध्वंसि कर्मोत्सवं भावयेत् । सर्वे पुरुषार्थसिद्धिनिबंध-नत्वादबुद्धे॰ प्रधानतमत्वात्तद्विघातिकर्मानिवार्यताभावना प्रगुपदिष्टा । अमदपीत्यादि सद्वेद्याख्यकर्मण्युदीर्णे सति इति संबंध. ।

अशरणता भावनाका सविस्तर वर्णन आचार्य करते हैं ज्ञानावरणादिकर्म आत्मपरिणामोंसे उत्पन्न होते हैं कषायसें इन कर्मोंमें अधिक स्थिति पडती हैं. जब क्षेत्र, काल भाव वगैरह कारण आकर मिलते हैं तब अशुभ फल आत्माको इनसे मिलता है. तब इन कर्मोंका निवारण करनेमें कोई भी समर्थ नहीं होता है. इस वास्ते मैं अशरण हू ऐसा बार बार विचार करना योग्य है ऐसा आचार्य कहते हैं —

अर्थ—कर्मका उदय आनेपर विचार युक्त बुद्धि नष्ट होती है. अवग्रह ईहा इत्यादिरूप मति ज्ञान और और आप्तके उपदेशमें उत्पन्न हुआ श्रुतज्ञान इन दोनों से मनुष्य प्राणी हित और अहितका स्वरूप जान लेता है अन्य उपायसे हिताहित नहीं जाना जाता है. शास्त्रों में इनका स्वरूप इस प्रकार कहा है—

१ सत्पुरुष स्वाभाविक बुद्धि और आगमजन्य बुद्धि ऐसे बुद्धिके दो भेद मानते हैं. जो मनुष्य इन दो बुद्धि ओंको धारण करता है वही अपना हित जाननेमें समर्थ होता है अन्य समर्थ नहीं होता है.

२ जिसकी स्वाभाविक बुद्धि तो निर्मल है परतु गुरुके मुखसे जिसने शास्त्राध्ययन नहीं किया है वह पुरुष जैसे नेत्रयुक्त मनुष्य रूपको देखकर भी भाषाके विना उसका वर्णन नहीं कर सकता है वैसे हितकर धर्मका स्वरूप जाननेमें असमर्थ होता है.

३ जिसको शास्त्रज्ञान तो है परतु स्वाभाविक निर्मल बुद्धि नहीं है वह श्रुतज्ञानका फल जो हित उसको नहीं प्राप्त कर सकता जैसे दीप हाथमें लेकर भी अंधा पुरुष अपनी इच्छित वस्तु नहीं प्राप्त कर सकता है.

४ जिसने अपना मुह वस्त्रसे ढक लिया है उसको दर्पणकी क्या जरूरत है. जो दान देता नहीं और भोगता भी नही उसको धनकी क्या अवश्यकता है! जो डरपोक है युद्धमें वह पुरुष शस्त्र लेकर करेगा ही क्या? वैसे जिसकी स्वाभाविक बुद्धि नहीं है वह शास्त्रसे अपना हित साध्य नहीं कर सकेगा

५ ज्ञानावरण कर्मका उदय आनेसे उपर्युक्त बुद्धि नष्ट हो जाती है ज्ञानी पुरुष, ज्ञान और उपकरण इनका द्वेष करना, इनको छिपाना इनका नाश करना. इनके साथ मत्सरभाव रखना, इनमें विघ्न उत्पन्न करना इनको अयोग्य बतलाना, इनमें दोष लगाना, इनको पीडा देना, अकालमें अध्ययन करना दूसरों की इंद्रिया बिगाडना इत्यादि कारणोंसे ज्ञानावरणीय कर्मका बंध होता है यह बंध अवग्रह ईहा, अवाय और धारणा रूप मतिज्ञान अथवा श्रुत ज्ञानादिकका नाश करता है.

१ ज्ञानको आच्छादन करनेवाला कर्म जब यह अपुण्यवान जीव बंध लेता है तब अवग्रह ईहा. अवाय और धारण ऐसे चारों ज्ञानोंसे भी पदार्थोंका सच्चा स्वरूप जानने में असमर्थ होता है

२ जो मनुष्य पदार्थोंके विशेषधर्मोंको नहीं जानता है वह नेत्रवान होकर भी अंधा है, सुनता हुआ भी बहिरा है, और जिव्हा युक्त होनेपर भी रसोंको नहीं जानता है ऐसा समझना चाहिये

३ कर्मसे ढका हुआ यह कभी एकेंद्रिय, कभी द्वीद्रिय, त्रींद्रिय, चतुरिंद्रिय और कभी असज्ञी पंचेंद्रिय बनता है

४ कर्माच्छादित यह जीव हितकर वस्तु को न देख सकता है न सुन सकता है और न उसका विचार करनेमें समर्थ होता है कर्मके वश होकर भी न दान देता है और न धनका स्वयं उपभोग ले सकता है इसलिये ऐसा कर्माच्छादित जीव पशुके बराबरीका समझना चाहिये

५ अल्प बुद्धि होनेसे मनुष्य अपने समीपका भी हितकर पदार्थका स्वरूप जाननेमें असमर्थ होता है. फिर जो श्रुतज्ञानसे ही जाना जाता है, जो परलोकमें हित करनेवाला है ऐसे पदार्थका स्वरूप वह अज्ञ कैसा जानेगा?

६ महाभयानक गुहाके सघन अंधकारमें प्रवेश करनेसे, अगाध पानीमें प्रवेश करनेसे, दृढ ऐसे कैदखानेमें डाला जानेसे प्राणीको कष्ट दायक अज्ञानका अनुभव आता है

७ अंधकारमें प्रवेश, पानीमें डूबना, कैदखानेमें डाला जाना इन बातोंसे प्राणिओंको एक जन्ममें-ही कष्ट होगा परंतु अज्ञानजन्य दुःख अनंत भवतक प्राणिओंका साथ नहीं छोडता है

८ जो पुरुष स्वाभाविक बुद्धिसे रहित है वह विशाल श्रुतज्ञान जो कि मनुष्यकी तीसरी आंख है धारण करनेमें असमर्थ होता है.

जिसको यह श्रुतज्ञान है वह नेत्रोंसे अंध होनेपर भी मोक्ष नगरीके कल्याणकारक मार्गमें सुखसे जा सकता है.

यह ज्ञानावरण कर्म इस प्रकारका अज्ञान उत्पन्न कर देता है कि उसको हटानेमें कोई समर्थ नहीं है. इसका निवारण करनेमें कोई उपाय है नहीं असातावेदनीय कर्मके उदयसे अमृत भी विष होता है और तृण भी छुरीका काम देता है बंधु भी शत्रु बन जाते हैं

---

ज्ञानावरणस्य तु क्षयोपशमे किं स्यादित्याह—

मुक्खस्स वि होदि मदी कम्मोवसमे य दीसदि उवाओ ॥
णीया अरी वि सच्छं वि तणं अमयं च होदि विसं ॥ १७३० ॥

अस्ति कर्मोदये बुद्धिरुपायमवलोकते ॥
विपक्षो जायते बंधुः शस्त्रं पुष्पं विषं सुधा ॥ १७९७ ॥

विजयोदया—मुक्खस्स वि होदि मदी मूर्खस्यापि भवति मति । कम्मोवसमे य दीसदि उवाओ कर्मोपशमे ज्ञानावरणस्य तु क्षयोपशमे सति उपायो दृश्यते । शुभगत्वपुण्यकर्मोदयात् । णीया अरी वि शत्रवोऽपि बंधवो भवंति सच्छंपि तणं शस्त्रमपि तृणं भवति, अमद होदि विसं विषमप्यमृतं भवति सद्वेद्योदये ॥

तद्विपर्ययदर्शनात्तत्कर्मानिवार्यता द्रढयति—

मूलारा—मुक्खस्स वि यथाजातस्य । कम्मोवसमे तथाविधमतिज्ञानावरणक्षयोपशमे सति । उवाओ कर्मोपशमस्य साधन । च विसं विषमपीत्यर्थः ॥ असद्वेद्योदयाभावे सद्वेद्योदये वा सति द्विषदादयोऽपि बांधवादिभावं भजति । तद्भावकरणक्षपणप्रगुणकर्मण उपशमे उदये वा उपायो लोके शास्त्रे च प्रतीयते इति समन्वयः ॥

ज्ञानावरणीय कर्म के क्षयोपशमसे क्या होता है इसका विवेचन—

अर्थ—ज्ञानावरणीय कर्मका क्षयोपशम होनेपर मूर्ख भी विद्वान् होनेमें देर नहीं लगती है. ज्ञानावरण क्षयोपशमसे संकटसे पार पडनेका उपाय ध्यानमें आ सकता है क्योंकि उस समय पुण्यकर्मका उदय होजाता है. शत्रु भी मित्र होते हैं. शस्त्र भी तृणतुल्य निःसार होता है अर्थात् शस्त्रप्रहार भी पुष्पमालाके समान अनुभवमें आ जाता है. विष भी अमृत होता है.

---

स्थानतश्चलति नाकपर्वतः पुष्करं वसुमतिं प्रपद्यते ॥
त्वत्प्रसादमुपगम्य न प्रभो ! जातु यामि विकृतिं मनागपि ॥ १५४८ ॥
मनसा वपुषा वचसा भगवन्ननुशासनमेतदनन्यमतिः ॥
तव यो विदधाति सदा विधिना शिवतातिमुपैति स मुक्तमलः ॥१५४९॥

इति अनुशिष्टिः ॥

विजयोदया—ठाणा चलिज्ज स्वस्मात्स्थानाच्चलिष्यति मेरु । भूमि परावृतमस्तिका भविष्यति । नाहं विकृतिं गमिष्यामि भवता पादप्रसादेन ॥

मूलारा—चलेज्ज चलिष्यति । ओमच्छिया अधोमस्तका । गच्छ गमिष्यामि । विगदिं विकृतिं विराधनामित्यर्थ. ॥ चूलिका १२ क्षपकानुशिष्टिः ॥ सूत्रतः ३३ ।

अर्थ—स्थानसे पर्वतभी हिल जावेगा, अथवा समस्त पृथ्वी भी ओंधी हो जायगी तो भी मैं आपके चरणानुग्रहसे विकारी नहीं होऊगा

---

इत्थ गणेंद्रमुखचंद्रभवं तमिच्छ-
दाशाधरेष्टमनुशिष्ट्यमृत प्रवर्ज्य ॥
श्रद्धाप्रियामनुसमत्ववने किलातो ॥
हृष्यन्त्वलं क्षपकपुगवपुंश्चकोराः ॥

इत्याशाधरानुस्मृतग्रंथसदर्भे मूलाराधनादर्पणे पदप्रमेयार्थप्रकाशीकरणप्रवणे षष्ठ आश्वासः ॥

## सप्तम आश्वासः ।

पंकोद्रेककृतेष्वघेषु गुरुणा नीत्वा स्मृतिं वर्मितः ।
सम्यक्साम्यमधिष्ठितः पुरु पिबन्सद्ध्यानशर्मामृतम् ॥
लेश्याशुद्धिमितश्चतुर्विधमहासंघाभिकांक्षं पदं ।
यः प्राप्नोति महान्तमर्हति मह देहोऽपि तस्याघहृत् ॥ १ ॥

अथ यथोपदिष्ट स्वशक्त्यनिगूहनेन सस्तरस्थस्य साधोरनुतिष्ठतः प्राक्तनदुर्दैवविपाकवशादुपस्थिते कचित्समाधि विघ्ननिबंधने निर्यापकाचार्येणावश्यकरणीय सारणाक्रम कथयितुं गाथाविंशत्योपक्रमते तत्रादौ प्रागुक्तमेवार्थमनुस्मरयितुं उपन्यस्यति—

एवं खवओ संथारगओ खवइ विरियं अगूहंतो ॥
देदि गणी वि सदा से तह अणुसट्ठिं अपरिदंतो ॥ १४८९ ॥

निर्जरां कुरुते गुर्वीं कुर्वाणः क्षपकस्तपः ॥
दत्ते निर्यापकः शिक्षामनिर्विण्ण' प्रियंवदः ॥ १५५० ॥

समाप्तमनुशासनम् ॥

मूलारा—एव यथोक्तदशलक्षणश्रमणधर्माचरणक्रमेण । खवदि क्षपयति च बहुतरमेकदेशेनाशुभं कर्म प्रागुपार्जितं अभिनवं निरुंधानः । तथा पूर्वोक्तेनैव विधिना । अपरिदतो अनिर्विण्णः । उक्त च—

निर्जरा कुरुते गुर्वीं कुर्वाण' क्षपकस्तप' ॥
दत्ते निर्यापकः शिक्षामनिर्विण्ण' प्रियवदः ॥

एता श्रीविजयो नेच्छति—

अर्थ—इस प्रकार दश प्रकारके धर्मका आचरण करनेसे क्षपक पूर्वबद्ध कर्मका एक देश अथवा बहुभाग का क्षपण-क्षय करता है. और निर्यापकाचार्यभी न थककर उसे सदा उपदेश देते रहते हैं.

---

सारणेत्येतत्सूत्रपदव्याख्यानमुत्तरम् ॥

अकडुगमतित्तयमणं विलंब अकसायमलवणं मधुरं ॥
अविरस मदुब्विगंधं अच्छमणुण्हं अणदिसीदं ॥ १४९० ॥

कटुतिक्तकषायाम्ललवणस्वादुभीरसैः ॥
पानकं मध्यमैर्युक्तं तस्मै क्षीणाय दीयते ॥ १५५१ ॥

विजयोदया—अकडुगं अकटुक, अतिक्त, अनाम्लं, अकषायं, अलवणं, अमधुर, अविरसं, अदुरभिगंधं, स्वच्छमनुष्णशीत ॥

तत्कालप्रयोज्यं पानक गाथाद्वयेनानुस्मारयति--

मूलारा—अकडुग अत्रेपदर्थे नञ्। तेन कटुतिक्ताम्लकपायलवणमधुरोष्णगुणानामौत्कट्यमेव निपेध्यमनति शीतमिति निर्देशन ज्ञापितत्वात्। अविरस अविगतरस। मध्यमकटुकादिरसयुक्त इत्यर्थः। अदुग्गिंध सुगधि। उक्त च–

कटुतिक्तकपायाम्ललवणस्वादुभी रसैः ॥
पानकं मध्यमैर्युक्त तस्मै क्षीणाय दीयते ॥

अर्थ—जो आहार कटुक, तिक्त, आम्ल, कषायला नमकीन, मधुर, विरस, दुर्गंध, अस्वच्छ, उष्ण और शीत नहीं है ऐसा आहार क्षपकको देना चाहिये अर्थात् मध्यम रसोंका आहार देना चाहिए

---

पाणगमासिंभलं परिपूयं खीणस्स तस्स दादव्वं ॥
जह वा पच्छं खवयस्स तस्स तह होइ दायव्व ॥ १४९१ ॥

विजयोदया—पाणगमासिंभल पानकमश्लेष्मकारि परिपूत क्षीणाय क्षपकाय दातव्यं। यथाभूत वा क्षपकस्य तस्य पथ्य तथा भूत दातव्यम् ॥

मूलारा—असिंभलं यत्कफं न करोति। परिपूदं गालितं। पच्छं समाध्यविरोधि ॥

अर्थ—जो पेय पदार्थ क्षीण क्षपकको दिया जाता है वह कफको उत्पन्न करनेवाला न होना चाहिये. और वह स्वच्छ पवित्र होना चाहिये. क्षपकको जो देनेसे पथ्य-हितकर होगा ऐसा ही पानक देने योग्य है.

---

संथारत्थो खवओ जइया खीणो हवेज्ज तो तइया ॥
वोसरिदव्वो पुव्वविधिणेव सोपाणगाहारो ॥ १४९२ ॥

यदासौ नितरां क्षीणस्तदपि त्याज्यते तदा ॥
पटीयांसो न कुर्वन्ति निरर्थकं नियोजनम् ॥ १५५२ ॥

विजयोदया—संथारत्थो मस्तरस्थ क्षपको यदा क्षीणो भवेत्तदा व्युत्सृष्टव्योऽपानकविकल्प पूर्वविधिनैव ॥

अतीक्ष्णस्य यथोक्तपानकत्यजनविधिमनुस्मरयति –

मूलारा—अतिक्षीण इत्यर्थ. । तो तथाविधपानकत्यानात् । वोसरिदव्वो त्याजयितव्यः । पुव्वविधिणेव हानिसूत्रोक्तक्रमेणैव ॥

अर्थ—मस्तरपर सोया हुआ क्षपक जब क्षीण होगा तब पानकके विकल्पका भी 'हानि' नामक सूत्रके अनुसार त्याग करना चाहिये

---

एवं संथारगदस्स तस्स कम्मोदएण खवयस्स ॥
अंगे कच्छइ उट्ठिज्ज वेयणा ज्झाणविग्घयरी ॥ १४९३ ॥
इत्थं शुश्रूषमाणस्य संस्तरस्थस्य वेदना ॥
पूर्वकर्मानुभावेन काय क्वाप्यस्य जायते ॥ १५५३ ॥

विजयोदया—एवं संथारगदस्स एवं संस्तरगतस्य क्षपकस्य कर्मोदयेन क्वचिदुर्वेदनोपजायते ध्यानविघ्नकारिणी ।
इत्थं शुश्रूषमाणस्यापि दुःखोदयशल्कसादिस्मे वेदनोत्पद्यते इत्याह—

मूलारा—कत्थइ कचित्कुक्ष्यादौ । वेदणा शूलादिपीडा ॥

अर्थ—संस्तरपर आरूढ हुए क्षपकके शरीरमें कर्मके उदयसे ध्यानमें विघ्न उत्पन्न करनेवाली वेदना उत्पन्न होती है अर्थात् पेट वगैरह शरीरके किसी अवयवमें शूलादि पीडा कर्मोदयसे उत्पन्न होती है

---

बहुगुणसहस्सभरिया जदि णावा जम्मसायरे भीमे ॥
भिज्जदि हु रयणभरिया णावा व समुद्दमज्झम्मि ॥ १४९४ ॥
दर्शनज्ञानचारित्रतपोरत्न भृतस्ततः ॥
संसारसागरे घोरे यतिपोतो निमज्जति ॥ १५५४ ॥

विजयोदया—बहुगुणसहस्सभरिदा बहुभिर्गुणसहस्रैर्भरिता संपूर्णा यतिनौर्जन्मसागरे भीमे यदि भेदमुपेयात् रत्नत्रयपूर्णा नौरिव समुद्रमध्ये ॥

तद्वेदनोदयात्सद्ध्यानविनाशेन दुर्ध्यानावेशात्साधुर्विराध्य रत्नत्रय मृतो घोरे संसारसागरे निमज्जतीति दर्शयति—

मूलारा—जदिणावा यतिनौः । पोत इव यत्नतः प्रणेयत्वादाश्रिताना तारकत्वाच्च । भिज्जदि दैववशाद्विघटते । यतिभावं नौभावं मुंचतीत्यर्थः ॥

अर्थ—यह यतिरूप नौका हजारो गुणोंसे भरी हुई है कदाचित् भयकर संसारसमुद्रमें डूब जायगी. तात्पर्य व्रत, शील, समिति गुप्ति. रत्नत्रय इत्यादि गुणोंसे भरी हुई क्षपकरूपी नौका रोगवेदनासे डूबनेका प्रसग आनेपर उसे बचाना चाहिये

---

गुणभरिदं जदि णावं दट्ठूण भवोदधिम्मि भिज्जंतं ॥
कुणमाणो हु उवेक्खं को अण्णो हुज्ज णिद्धम्मो ॥ १४९५ ॥
निमज्जंतं भवाम्भोधौ यो दृष्ट्वा तमुपेक्षते ॥
अधार्मिको निराचारो नापरो विद्यते ततः ॥ १५५५ ॥

विजयोदया—गुणभरिद जदि णाव गुणैः पूर्णां यतिनावं भवसमुद्रमध्ये भिद्यमानां दृष्ट्वा यः करोत्युपेक्षां तस्मात्कोऽन्यो भवेद्धर्मनिःक्रातः ॥

आराधकस्य समाधिविघ्नकारणमप्रतिकुर्वाणं प्रणिंदति—

मूलारा—कुणमाणादो कुर्वाणात । उवेक्खं दुर्दैवोदयजन्यमानशूलादिपीडाप्रतीकाराभाव ॥

अर्थ—गुणोंसे परिपूर्ण यतिनौका यदि भवसमुद्रमें फूटती हुई देखकर जो उसकी उपेक्षा करता है उससे जगतमें अन्य अधार्मिक कोन होगा ?

---

वेज्जावच्चस्स गुणा जे पुव्वं विच्छरेण अक्खादा ॥
तेसिं फिडिओ सो होइ जो उवेक्खेज्ज तं खवयं ॥ १४९६ ॥

वैयावृत्यगुणाः पूर्वं कथिता ये प्रपचतः ॥
तैरुपेक्षापरो नीचस्त्यज्यते निखिलैरपि ॥ १५५६ ॥

विजयोदया—वेज्जावच्चस्स गुणा वैयावृत्यस्य गुणा ये पूर्वं विस्तरेण व्याख्यातास्तेभ्य प्रच्युतो भवति य उपेक्षते क्षपकं ॥

आराधकबाधामप्रतिकुर्वत· स्वार्थभ्रंशोऽपि स्यादित्याह—

मूलारा—पुव्वं गुणानुशिष्ये गुणपरिणामो इत्यादिना । तेसिं फिडिदो तेभ्यश्च्युतः ॥

अर्थ—वैयावृत्यके गुणोंका विस्तारसे पूर्वमें वर्णन किया है. जो क्षपककी उपेक्षा करता है वह उन गुणोंसे भ्रष्ट होता है. अर्थात् क्षपककी उपेक्षा करनेसे क्षपक संसारसमुद्रमें डूबेगा और उपेक्षकके भी गुण नष्ट होंगे उसके वात्सल्यादि गुणोंका नाश होगा

---

तो तस्स तिगिंछा जाणएण खवयस्स सव्वसत्तीए ॥
विज्जादेसेण वसे पडिकम्मं होइ कायव्वं ॥ १४९७ ॥

वैयावृत्यं ततः कार्यं चिकित्सां जानता स्वयम् ॥
वैद्योपदेशतश्चास्य शक्तितो भक्तितः सदा ॥ १५५७ ॥

विजयोदया—तो तस्स ततस्तस्य क्षपकस्य चिकित्सा जानता सर्वशक्त्या प्रतिकर्म कर्तव्यं वैद्यस्य चोपदेशेन ॥

एवं क्षपकोपेक्षणे क्षतिप्रदर्शनाद्वैयावृत्ते निर्यापकाचार्यं नियुंक्ते—

मूलारा—तो प्रणिधानस्वार्थभ्रंशाद्धेतोः । तस्स· तिगिंछाजाणएण तस्य संबंधिनीं चिकित्सा स्वय वैद्योपदेशेन वा जानता निर्यापकाचार्येण सपडिकम्मं तस्य प्रतीकार· कार्यं इति संबधः ॥

अर्थ—क्षपकके रोगका निदान जाननेवाले यतीने वैद्यके उपदेशानुसार अपनी सर्व शक्तीसे उसके रोगका परिहार करना चाहिये.

---

णाऊण विकारं वेदणाए तिस्से करेज्ज पडियारं ॥
फासुगदव्वेहिं करेज्ज वायकफपित्तपडिघादं ॥ १४९८ ॥

विज्ञाय विकृतिं तस्य वेदनायाः प्रतिक्रिया ॥
औषधैः पानकैः कार्या वातपित्तकफापहैः ॥ १५५८ ॥

विजयोदया—णादूण विकारं ज्ञात्वा विकारं तस्या वेदनाया तत प्रतिकारं कुर्यात् । योग्यैर्द्रव्यैर्वातकफपित्तप्रतिघातं ॥

मूलारा—वियार दोषवैषम्य । तिस्से तस्याः । पडिघादं शान्तिम् ॥

अर्थ—वातादिकसे उत्पन्न हुए विकार को जानकर योग्य पदार्थोंसे वेदनाका प्रतिकार करना चाहिये. जिससे वातादिक विकार नष्ट होंगे.

---

वच्छीहिं अवद्दवणतावणेहिं आलेवसीदकिरियाहिं ॥
अब्भंगणपरिमद्दण आदीहिं तिगिंछदे खवयं ॥ १४९९ ॥
अभ्यंगस्वेदनालेपवस्तिकर्मांगमर्दनैः ॥
परिचर्यापरेणापि कृत्यास्य परिकर्मणा ॥ १५५९ ॥

विजयोदया—वच्छीहिं वस्तिकर्मभिः, अवद्दवणतावणेहिं ऊष्मकरणतापनैः, आलेपनेन, शीतक्रियया, अभ्यंगपरिमर्दनादिभिश्च चिकित्सते क्षपक ॥

मूलारा—वच्छीहिं वस्तिकर्मभिः । वत्तीहिं इति पाठे वर्तिभिरित्यर्थः । उवद्दवण उपनाहैः । तावणेहिं स्वेदनैः सीदकिरियाहिं प्रासुकजलसेवनादिभिः । परिमद्दण अंगमर्दनैः । तिगिंच्छदे अपगतवेदनं करोति ॥

अर्थ—वस्तिकर्म ( इनिमा करना ) अग्निसे सेकना, शरीरमें उष्णता उत्पन्न करना, औषधीका लेप करना, शीतपना उत्पन्न करना, सर्व अंगका मर्दन करना, इत्यादिके द्वारा क्षपककी वेदनाका उपशम करना चाहिये.

---

एवं पि कीरमाणो परियम्मे वेदणा उवसमो सो ॥
खवयस्स पावकम्मोदएण तिव्वो ण हु ण होज्ज ॥ १५०० ॥
कस्यचित्क्रियमाणेऽपि बहुधा परिकर्मणि ॥
पापकर्मोदये तीव्रे न प्रशाम्यति वेदना ॥ १५६० ॥

विजयोदया—एवं पि कीरमाणे प्रतीकारे क्षपकस्य वेदनोपशम तीव्रेण पापकर्मोदयेन नापि भवेदपि, नहि बहिर्द्रव्यमाहात्म्येनैव कर्माणि स्वफलं न प्रयच्छन्ति । तदेव हि बहिर्द्रव्यं एकस्य वेदना प्रशमयति नापरस्येति प्रतीतमेतद् ॥

अभिमुखपापविपाके प्रतीकारवैयर्थ्यमाह—

मूलारा—तिव्वेण घोरेण । उक्त च—

कस्यचित्क्रियमाणेऽपि बहुधा परिकर्मणि ॥
पापकर्मोदये तीव्रे न प्रशाम्यति वेदना ॥

अन्ये पावकम्मोदयेण तिव्वा व सा होज्ज इति पठित्वा पापकर्मोदये सति वेदनोपशमो न भवेत्, तीव्रा वा वेदना भवेदिति प्रतिपन्नाः ॥

अर्थ—इस प्रकार इलाज करनेपरभी, तीव्र कर्मका उदय होनेसे बाह्य उपचारोंसे वेदनाका उपशम होता नहीं. बाह्य द्रव्योंसे किसी की वेदनाका उपशम होता है और किसीकी नहीं भी अतः कर्मोदयकी विचित्रता सिद्ध होती है

---

अहवा तण्हादिपरीसहेहिं खवओ हविज्ज अभिभूदो ॥
उवसग्गेहिंव खवओ अचेदणो होज्ज अभिभूदो ॥ १५०१ ॥

क्षपको जायते तीव्रैरुपसर्गपरीषहैः ॥
अभिभूतः परायत्तो विह्वलीभूतचेतनः ॥ १५६१ ॥

विजयोदया—अहवा तण्हादिपरीसहेहिं अथवा तृडादिभि परीषहैरभिभूतो भवेत्क्षपक, उपसर्गैर्वाभिभूतो निश्चेतनः स्यात् ॥

निमित्तान्तरमपि समाधिविघ्नस्याभिधत्ते—

मूलारा—अचेदणो विभ्रान्तो मूढो वा ॥

अर्थ—अथवा भूक, प्यास इत्यादि परिषहोंसे पीडित होकर क्षपक निश्चेतन होगा अर्थात् मूर्च्छित होगा अथवा भ्रान्त होगा तथा उपसर्गसे भी पीडित होनेपर मूर्च्छित होता है.

---

तो वेदणावसट्टो वाउलिदो वा परीसहादीहिं ॥
खवओ अणप्पवसिओ सो विप्पलवेज्ज जं किं पि ॥ १५०२ ॥

व्याकुलो वेदनाग्रस्तः परीषहकरालितः ॥
प्रलपत्यनिबद्धानि वाक्यानि स विचेतनः ॥ १५६२ ॥

विजयोदया—ततो वेदनावशार्तो व्याकुलितः परीषहोपसर्गैः क्षपकोऽसावनात्मवशो विप्रलपेद्यदि किंचित् ॥ विभ्रान्तत्वे विकारानाह—

मूलारा—तो विभ्रान्ताचेतनत्वात्पश्चात् । वेदणावसट्टो वेदनावशेनातुरः सन् । वाउलिदो व्याकुलीकृतः । विप्पलवेज्ज विविधं अनर्थकं जल्पेत् जं किंचि अनियद्धं ॥

अर्थ—वेदनाकी असह्यतासे दुःखी होकर, परीषह और उपसर्गसे व्याकुल होकर क्षपक आपेमें नहीं रहेगा अर्थात् उसके चित्तकी एकाग्रता भंग होगी जिससे वह पूर्वापर संबंध विरहित बडबड करेगा.

---

उब्भासेज्ज व गुणसेढीदो उदरणबुद्धिओ खवओ ॥
छट्ठं दोच्चं पढमं वसिया कुंटिलिदपदमिछंतो ॥ १५०३ ॥

अयोग्यमशनं पानं रात्रिभुक्तिं स कांक्षति ॥
चारित्रत्यजनाकांक्षी जायते वेदनाकुलः ॥ १५६३ ॥

विजयोदया—उब्भासेज्ज वदेद्वायोग्य, संयमगुणश्रेणितः कृतावतरणबुद्धिः, छट्ठं रात्रिभोजनं, दोच्चं पाणं, दिवसे पढमं च अशनं वा । सिया कदाचित् । कुंटिलिदपदमिच्छंतो स्खलनपदं इच्छन् ॥

मूलारा—उभासेज्ज अयोग्य वदेत् । गुणसेढीदो संयमगुणारोहणात् । उदरणबुद्धीओ अवतरणे कृतमतिः । छट्ठं रात्रिभोजनं । दोच्चं पानं । पढमं भोजनं । सिया कदाचित् । अकाले भोजनं पान वेत्यर्थः । कुटिलिदपदं स्खलनपदं । हीनस्थानमित्यन्यः ॥ उक्तं च—

वदेद्वानुचितं साधुः संयमत्यजनोन्मुखः ॥
अकाले भोजनं पानं वा वाञ्छन्स्खलितं पदम् ॥

अर्थ—अयोग्य भाषण बोलेगा, सयमगुणसे उतरनेकी बुद्धि करेगा, अर्थात् संयम छोडनेका विचार उसके मनमें उत्पन्न होगा रात्रिभोजन करना, अथवा रात्रौ पानी पीना, दिनमें प्रथम-भोजन करना, एतद्विषयक विचार उसके मनमें उत्पन्न होंगे इस प्रकारसे वह सयमसे स्खलित होनेकी इच्छा करेगा.

---

तह मुज्झंतो खवगो सारेदव्वो य सो तवो गणिणा ॥
जह सो विसुद्धलेस्सो पच्चागदवेदणो होज्ज ॥ १५०४ ॥

**तथेति मोहमापन्नः सारणीयो गणेशिना ॥
यथास्ति शुद्धलेश्याकः स प्रत्यागतचेतनः ॥ १५६४ ॥**

विजयोदया—तह मुज्झंतो खवगो मोहमुपगच्छन् क्षपकस्तथा सारयितव्योऽसौ गणिना कथं ? यथा विशुद्धलेश्यो भवति प्रत्यागतचेतनश्च ॥

वेदनादिना विभ्रम्य विकुर्वाणे क्षपके किं कार्यमित्यत्राह—

मूलारा—तध मुज्झंतो खवओ विप्रलपनादिप्रकारेण व्यक्तविभ्रमो भवन् । सारेदव्वो स्मरयितव्यः सर्वः। तगो सः । आसन्नमृत्युरित्यर्थः । पच्चागदवेदणो व्याघुटितयथार्थबुद्धिः सन् ॥

अर्थ—इस प्रकार मोहको प्राप्त हुए क्षपकको आचार्य पूर्वाचरणका स्मरण दिलाते हैं. जिस उपायसे वह निर्मल लेश्याका धारक होगा और चैतन्यकी प्राप्ति करेगा ऐसा ही उपाय वे करते हैं

---

सारणोपाय कथयति—

कोसि तुमं किं णामो कत्थ वससि को व संपही कालो ॥
किं कुणसि तुमं कह वा अत्थासि किं णामगो वाहं ॥ १५०५ ॥

**कस्त्वं किं नाम ते काल. सांप्रतं क्व वर्तसे ॥
कोऽहं किं मम नामेति तं पृच्छति गणी यतिम् ॥ १५६५ ॥**

विजयोदया—कोऽसि तुमं कस्त्व ? किं नामधेय ? कत्थ वससि क्व वससि ? को व संपहीकालो को वेदानीं काल ? किमयं दिवा रात्रिर्वा ? किं कुणसि तुमं किं करोषि भवान् ? कधं वा अत्थसि कथं वा तिष्ठसि ? किं णामगो वाहं अहं वा किं नामधेय ?

कथमेप सारयितव्य इत्यत्राह—

मूलारा—सपदि काले । इदानींकालः किमय दिवा रात्रिर्वा ॥

सारणोपाय कहते हैं—

अर्थ—हे मुने! तुम कोन हो? तुह्मारा नाम क्या है? तुम कहां रहते हो? अब कोनसा काल है? अर्थात् अब दिवस है या रात्री है? तुम क्या कार्य करते हो? और कैसे रहते हो? मेरा नाम क्या है?

एवं आउच्छित्ता परिक्खहेदुं गणी तयं खवयं ॥
सारइ वच्छलयाए तस्स य कवयं करिस्संति ॥ १५०६ ॥

इत्थं क्षपकमापृच्छ्य चित्तं जिज्ञासता सता ॥
वत्सलत्वेन कर्तव्या सारणा तस्य सूरिणा ॥ १५६६ ॥

विजयोदया—एव आउच्छित्ता एवमनुपरत सारयति गणी त क्षपक । किं सचेतनो निश्चेतन इति परीक्षितुकामः वत्सलतया यद्यस्ति चेतना कवचं करिष्यामीति मत्वा ॥

किमर्थमेप सार्यते इत्यत्राह—

मूलारा—अव्वोच्छिण्णं अनुपरत । आपुच्छित्ता इति प्रायिकः पाठः । परिक्खाहेदुं किमयं सचेतन उत निश्चेतन इति परीक्षणार्थं । सारेदि स्मृतिं प्रापयति । वच्छलदाए वात्सल्येन । कवचं करिस्संति यद्यस्ति चेतनास्य तदा कवच करिष्यामीति मत्वा ॥

अर्थ—यह क्षपक सचेतन है अथवा अचेतन है अर्थात् यह सावधान है किंवा असावध है इसका परीक्षण करनेके लिये बडे प्रेमसे उपर्युक्त प्रश्न वारवार उसको पूछते हैं यदि इसमें चेतना होगी अर्थात् यह सावध होगा तो मेरे पूछे हुए प्रश्नोंका उत्तर देगा और सावध है ऐसा सिद्ध होनेपर इसको हम; कवच करेंगे ऐसा हेतु मनमें धारण कर आचार्य उपर्युक्त प्रश्न क्षपकको करते हैं

जो पुण एवं ण करिज्ज सारण तस्स वियलचक्खुस्स ॥
सो तेण होइ णिद्धंधसेण खवओ परिचत्तो ॥ १५०७ ॥

मुख्यतः क्षपकस्येत्थं-य' करोति न सारणम् ॥
तेनासौ वर्जितो नूनं जिनधर्म इवोज्ज्वलः॥ १५६७ ॥

विजयोदया—जो पुण एव ण करिज्ज यः पुनरेवं न कुर्यात् सारणं। स्खलितचित्तवृत्ते' स क्षपकस्तेन परित्यक्तो भवति सूरिणा ॥

तथा तदपसारणे दोषमाह—

मूलारा—विप्पलक्खस्स स्खलितचित्तवृत्तेः । णिद्धसेण निर्दयेन ॥

अर्थ—जो निर्यापकाचार्य ऐसे प्रश्न नहीं पूछेगा और जिसकी चित्तवृत्ति भ्रष्ट हुई है ऐसे क्षपकको स्मरण दिलाकर रत्नत्रयमें स्थिर न करेगा तो उस निर्दय निर्यापकाचार्यने क्षपकका त्याग किया है ऐसा माना जावेगा।

---

एवं सारिज्जंतो कोई कम्मुवसमेण लभदि सदिं ॥
तह य ण लभिज्ज सदिं कोई कम्मे उदिण्णम्मि ॥ १५०८ ॥

तस्येति सार्यमाणस्य कस्यचिज्जायते स्मृतिः ॥
तीव्रकर्मोदये नान्यः स्मरणं प्रतिपद्यते ॥ १५६८ ॥
संततसारणवारणकारी कामकषायहृषीकनिवारी ॥
धर्मवतो विदधीत समाधिं सर्वमपास्य गणी तरसाधिम् ॥ १५६९ ॥

इति सारणं

विजयोदया—एवं सारिज्जंतो एवं सार्यमाण कश्चित् चारित्रमोहोपशमेन वा स्मृतिं यो योग्यविषया लभते। अयुक्तेयं मम इच्छा अकाले भोक्तु पातु वा प्रत्याख्यात कथं कालेऽपि प्रार्थयामीति न लभते स्मृतिं कश्चित्कर्मण्युदीर्णे नो इन्द्रियमतिज्ञानावरणे। सारणा ॥

तथा सारणायामपि लघुकर्मण एव स्मृतिः स्यान्नान्यस्येत्याह—

मूलारा—कोई कश्चिन्नोइन्द्रियमतिज्ञानावरणक्षयोपशमविशेषं प्राप्तः। कम्मुवसमेण चारित्रमोहोपशमेन । असद्वेद्योपशमेन वा। सदिं अयुक्तेयमिच्छा मम काले भोक्तुं पातु । वा प्रत्याख्यातं वा कथं कालेऽपि प्रार्थयामीति योग्यायो-

ग्यविषयां बुद्धिं । तध वि सार्यमाणोऽपि । कम्मे नोइंद्रियमतिज्ञानावरणे । उदिण्णम्मि तीव्रवेदनादिवशाद्दुर्निवारमुदेति ॥
सारणा सूत्रतः ३४ अंकतः २०

अर्थ—इस प्रकार अयोग्य इच्छासे परावृत्त करनेपर भी कोई क्षपक पापकर्मके उपशमसे योग्य विषयके सरण को प्राप्त होता है अर्थात् मैं अकालमें भोजन करनेकी और पेय पदार्थ पीनेकी इच्छा की थी जिसका मैंने त्याग किया है उसका योग्य कालमें भी सेवन करना अनुचित है. ऐसा सरण उसको होकर वह अयोग्य आचरणसे परावृत्त होता है. परंतु जिसका पापकर्म उदयमें आता है और नो इंद्रियमतिज्ञानावरण कर्म उदयमें आता है वह स्मरणशून्य होता है. यह सारणा नामक प्रकरण समाप्त हुआ

---

सदिमलभंतरस्स वि कादव्वं पडिकम्ममट्ठिय गणिणा ॥
उवदेसो वि सया से अणुलोमो होदि कायव्वो ॥ १५०९ ॥

प्रतिकर्म विधातव्यं तस्य स्मृतिमगच्छत. ॥
उपदेशोऽपि कर्तव्यः स्मरणारोपणक्षम' ॥ १५७० ॥

विजयोदया—सदिमलभतस्स वि स्मृतिमलभमानस्यापि गणिनाऽस्थित कर्तव्य । प्रतिकार, उपदेशोऽपि अनुकूल. सदा तस्य कर्तव्य' ॥

अथ तथाकृतसारणस्याराधकस्य वचनं गाथाना चतुःसप्तत्यधिकेन शतेन व्याचिख्यासुस्तदुपक्रमाय प्रथम षड्गाथाः कथयति—

मूलारा—अट्ठिदं निरंतर । अणुलोमो स्मरणारोपणप्रवणः । दर्शनानुयायीत्यपरः ॥

अर्थ—जो स्मृतिको प्राप्त होता नहीं है उसको भी निरतर उपाय करना चाहिये उसको सावध करनेके उपाय करने चाहिये. वैसे उसको अनुकूल उपदेश भी हमेशा करना चाहिये.

---

चेयंतोऽपि य कम्मोदयेण कोई परीसहपरद्धो ॥
उब्भासेज्ज वउक्कावेज्ज व भिंदेज्ज व पदिण्णं ॥ १५१० ॥

परीषहातुरः कश्चिज्जानानोऽपि न बुध्यते ॥
आर्तः पूत्कुरुते दीनो मर्यादां च विभित्सति ॥ १५७१ ॥

विजयोदया—चेदतो पि चेतयमानोऽपि कर्मोदयेन कश्चित्परीषहपराजितो यत्किंचिद्वदेत् आरटेत्, भिंद्याद्वा स्वां प्रत्याख्यातप्रतिज्ञा ॥

जानतोऽपि दुःखाकुलतयानुचितमाचरतः कटुकवचनादिकं न प्रयोज्यमित्युपदिशति—

मूलारा—परद्धो पराजितः । उक्कावेज्ज आरटेत् । पदिण्ण प्रत्याख्यानप्रतिज्ञा ॥

अर्थ—कोई क्षपक सावध होकर कर्मोदयसे परीषहोंसे व्याकुल होकर जो भी कुछ बोलेगा अनुचित भाषण करेगा अथवा जो जो आहारके और पीनेके पदार्थ त्यागनेकी प्रतिज्ञा की थी वह उसका भंग भी करेगा

---

ण हु सो कडुव फरुसं व भाणिदव्वो ण खीसिदव्वो य ॥
ण य वित्तासेदव्वो ण य वट्टदि हीलणं कादुं ॥ १५११ ॥

न विभीष्यः स नो वाच्यो वचन कटुकादिकम् ॥
न त्याज्य. सूरिणा तस्य कर्तव्यासादना न च ॥ १५७२ ॥

विजयोदया—ण हु सो कडुग स एव कुर्वन्क्षपक. न कर्तव्य. कटुक परुप वा न भर्त्सनीय, न च त्रासं नेतव्य, न च युक्त परिभव कर्तु तस्य ॥

मूलारा—ण खीसिदव्वो न निर्भर्त्स्यः । नोपहसनीय इत्यन्यः । न रोपयितव्य इत्यपरः । ण य वट्ठदि नापि युक्तं भवति । हीलण अनादर' ॥

अर्थ—प्रतिज्ञा भग करनेपरभी निर्यापकाचार्य उसे कडवे और कठोर शब्द न नोले उसकी भर्त्सना न

विराधितो भवन्मानो वचनैः कटुकादिभि ॥
जिघृक्षत्यसमाधानं प्रत्याख्यानं जिहासति ॥ १५७३ ॥

विजयोदया—परुषवचणादिगेहिं परुषवचनादिभिर्मानी विराधित सन् ॥

वाक्पारुष्यादिप्रयोगे दोषानाह—

मूलारा—विप्फुरिसिदो विराधितः । उद्दाण गुणश्रेणितः पतन । दुर्ध्यानं वा । अवक्कमणं सम्यक्त्वत्यागं ।

कठोरादिक वचन बोलनेसे कोनसा दोष उत्पन्न होता है? इस प्रश्नका उत्तर—

अर्थ—परुषवचनादिकोंसे यदि उसकी भर्त्सना की जावेगी तो वह संयमससे भ्रष्ट होगा, अथवा दुर्ध्यान को प्राप्त होगा, किंवा सम्यक्त्वका त्याग कर मिथ्यात्वी बनेगा.

---

तस्स पदिण्णामेर भित्तु इच्छतयस्स णिज्जवओ ॥
सव्वादरेण कवय परीसहणिवारणं कुज्जा ॥ १५१३ ॥

निर्यापकेन मर्यादां तस्य मंक्षु मुमुक्षतः ॥
कर्तव्य कवचो गाढ परीषहनिवारणः ॥ १५७४ ॥

विजयोदया—तस्स पदिण्णामेर तस्य स्वप्रतिज्ञाव्यवस्था भेत्तु वाछतो निर्यापकसूरि. कवच कुर्यान्निवारणक्षमं ॥

तस्य प्रतिज्ञालंघनोन्मुखत्वे प्रतिविधानमनुशास्ति—

मूलारा—मेरं व्यवस्थाम् ॥

अर्थ—जब क्षपक प्रतिज्ञाभंग करनेके लिये उद्युक्त होगा तब निर्यापकाचार्य क्षपकको प्रतिज्ञा भंगसे निवृत्त करनेकेलिये कवच करें.

---

णिद्ध मधुर पल्हादणिज्ज हिदयंगमं अतुरिद वा ॥
तो सीहावेदव्वो सो खवओ पण्णवंतेण ॥ १५१४ ॥

गंभीरं मधुरं स्निग्धमादेयं हृदयंगमम् ॥
सूरिणा शिक्षणीयोऽसौ प्रज्ञापनपटीयसा ॥ १५७५ ॥

विजयोदया—णिद्ध स्नेहसहितं, मधुर श्रोत्रप्रिय, हृदयसुखविधायि, हृदयप्रवेशि, अत्वरितं असौ शिक्षयितव्य· क्षपक प्रज्ञापयता ॥

मूलारा—तो सीहावेदव्वो शिक्षयितव्यः । पण्णवंतेण स्निग्धादिगुणयुक्त वचनं वदता गणिना ॥

अर्थ–निर्यापकाचार्य क्षपकको प्रेमसहित, कर्णप्रिय, हृदयको सुख देनेवाला, हृदयमें प्रवेश करनेवाला, ऐसा उपदेश करे.

---

रोगादंके सुविहिद विउलं वा वेदणं धिदिबलेण ॥
तमदीणमसंमूढो जिण पच्चूहे चरित्तस्स ॥ १५१५ ॥
संतोषबलतस्तीव्रास्ता रोगान्तकवेदनाः ॥
अकातरो जयामूढो वृत्तविघ्नं च सर्वथा ॥ १५७६ ॥

विजयोदया—रोगातंके महतोल्पाश्च व्याधीन् । विपुला वा वेदना धृतियेलन जय त्वमदीनोऽमूढश्च प्रत्यूहान् चारित्रस्य । वीतरागकोपता हि चारित्र । तद्व्याधिप्रतीकारार्थेषु आदरवतो वेदनासु च द्वेषवतो नश्यति । ततश्चारित्रविघ्नास्त्वया जेतव्या इति भाव ॥

दुःखनिवारणीं शिक्षा कवचापरनाम्नीमितः प्रबन्धेनाभिधत्ते—

मूलारा—रोगातंके अल्पान्महतश्च व्याधीन् । पच्चूहे विघ्नान् । वीतरागकोपता हि चारित्र तद्व्याध्यादिप्रतीकारार्थेषु वस्तुषु आदरवतो व्याध्यादिषु द्वेषवतश्च नश्यति ॥

अर्थ—हे क्षपक ! तू दीनता का छोड कर मोहका त्याग कर अल्प और बडे दोनो प्रकारके व्याधिओंको तथा वेदनाको धैर्यके बलसे जीतले. चारित्रके जो शत्रु हैं उनको भी तू जीतले. राग और कोपसे अपने आत्माको अलग रखनाही चारित्र है. रोगका नाश करनेवाले पदार्थोंमें जो आदर करता है और वेदनाओंमें जो द्वेष रखता है उसका चारित्र नष्ट होता है. अत· चारित्रके विघातक पदार्थोंको जीतना योग्य हैं

---

सव्वे उवसग्गे परिसहे य तिविहेण णिज्जिणाहि तुमं ॥
णिज्जिणिय सम्ममेदे होहिसु आराहओ मरणे ॥ १५१६ ॥

त्वं पराजित्य निःशेषानुपसर्गपरीषहान् ॥
समाधानपरो भद्र ! मृत्यावाराधको भव ॥ १५७७ ॥

विजयोदया—सव्वे वि य उवसग्गे सर्वांश्चोपसर्गान् परीषहांश्च मनोवाक्कायैर्जय । उपसर्गपरीषहजयदु खाभीरुता मनसा जयः । भीतोऽयमिति दयया न दु खानि हरन्ति । सन्निहितद्रव्यादिसहकारिकारणमसद्वेद्यमुदयागतं अनिवार्यवीर्य बल प्रयच्छत्येवेति धृतिबलेन भावना मनसा जयः । श्रातोऽस्मि वेदनादु सहात्मता पश्यत मदीयामिमा अतिकष्टामवस्था । दग्धोऽस्मि ताडितोऽस्मि इत्येवमादिदीनवचनानुच्चारणं । असकृदनुभूतार्थो परीषहा क्षुदादय , उपसर्गाश्च पूर्वं । पूत्कुर्वन्तमपि नामी मुचन्ति । केवल धृतिरहितोयं वराको रारटीति निंद्यते । न सन्मार्गात्प्रच्यावयितु इमे क्षमा इति उदार वचनता वचनेन जय । अदीनेक्षणमुखरागवत्ता अचलता च कायेन जयः । णिज्जिणिय सम्ममेदे निर्जित्यैव सम्यगेतानुपसर्गपरीषहान्मरणे मरणकाले । आराधओ होहिसि रत्नत्रयपरिणतो भाविष्यसि । उपसर्गपरीषहव्याकुलितचेतसो नैवाराधकता ॥

मूलारा—तिविधेण द्रव्यादियोगवशादापन्नोदयसवार्यवीर्यमसद्वेद्यमिमानुपसर्गपरीषहान्प्रतत्वकेन (?) निवार्येत । तदिदानीं वृथेयं दु खभीरुता, न खलु भीतोऽयमिति कृपया दुःखानि त्यजतीतीदृशी धृतिबलभावना मनसा तन्निर्जयः श्रातोऽस्मि दु सहा मे वेदना । पश्यत मदीयामिमामतिकष्टामवस्था । हा दैव ! दैवदग्धोऽस्मीत्यादि दीनवचनानुच्चारणं । परीषहाश्च सर्वेण शरीरिणा आसंसारमनुभूता· असकृदुपसर्गाश्च । न चामी पूत्कुर्वन्तमपि मुंचंति केवलं निःसत्वोऽयं कापुरुषो रारटीति निंद्यते न वैते सन्मार्गाच्च्यावयितुं मा क्षमंते इत्यादिधीरोदात्तवचनोच्चारणं च वाचा तत्पराजयः ॥

अदीनेक्षणत्वं प्रहसितमुखत्वाद्यवस्थान कायेन तद्विजय· ॥ एदे एतान् ॥

अर्थ—हे क्षपक ! तू मन वचन और शरीरसे सर्व उपसर्ग और परीषहोंको जीतले जब इनको तू पूर्ण जीतनेमें समर्थ होगा तबही मरणसमयमें तू रत्नत्रयाराधक होगा अन्यथा नहीं.

विशेषार्थ—उपसर्ग और परीषहोंके दु.खोंसे भयभीत न होना यही मनसे उपसर्ग और परीषहोंको जीतना माना जाता है यह पुरुष भययुक्त है ऐसा समझकर उपसर्ग और परीषह तकलीफ उत्पन्न करनेका कार्य दयासे छोडते हैं. ऐसा नहीं समझना चाहिये. समीपके द्रव्यादि पदार्थ ये असाता वेदनीय कर्मका उदय आनेमें सहकारि कारण है जब

वेदनीय कर्म उदयमें आता है और उसका अनिवार्य सामर्थ्य हे तब वह अपना फल देकर ही नष्ट होगा ऐसा धैर्य धारण कर विचार करना यह मनके द्वारा उपसर्ग परीषहों का जय समझना चाहिये.

मैं थक गया हूं, ये दुःख दुःसह हैं, मैं अतिशय कष्टतम अवस्था को प्राप्त हुआ हूं, मेरे शरीरमें आग लगी है, मैं पीटा जा रहा हूं इत्यादिक दीनता व्यक्त करनेवाले शब्द मुंहसे न निकालना यह वचनसे जय समझना चाहिये

क्षुधादिक परीषहोंका अनत बार अनुभव ले चुका हू अनेक बार घोर उपसर्ग भी मेरेको प्राप्त हुए थे जोरसे रोनेपरभी ये उपसर्गादिक दुःख मेरेको क्या छोड देंगे? यह पुरुष धैर्यरहित है, यह दीन है, बारबार रोता है, चिल्लाता है ऐसी लोक मेरी निंदा करेंगे ये उपसर्गादिक दुःख मेरेको सन्मार्गसे भ्रष्ट करनेमें असमर्थ हैं ऐसे उदार वचन कहना यह भी वचनजय समझना चाहिये

परीषहादिकोंसे दुःख होने परभी मुखमें दीनता न दिखाना, आखोंमें दीनता न धारण करना, मुख न सूखना, शरीरमें निश्चलता रहना, यह शरीरसे जय समझना चाहिये.

इस प्रकार उपसर्ग और परीषहोंको दृढतासे जीत कर मरणसमयमें हे क्षपक! तू रत्नत्रयाराधक हो

---

संभर सुविहिय जं ते मज्झम्मि चदुव्विहस्स संघस्स ॥
वूढा महापदिण्णा अहय आराहइस्सामि ॥ १५१७ ॥

अहमाराधयिष्यामि प्रतिज्ञा या त्वया कृता ॥
मध्ये संघस्य सर्वस्य तां स्मरस्यधुना न किम् ॥ १५७८ ॥

विजयोदया—संभर स्मृतिं निवेहि। सुविहिद सुचारित्र। किं स्मरामि इति चेत् तं ता प्रतिज्ञा कृतवानासि। मज्झम्मि मध्ये। कस्य ? चदुव्विधस्स चतुर्विधस्य संघस्य। वूढा धृता। महापदिण्णा महती प्रतिज्ञा। अहयं अह आराध-इस्सामि आराधयिष्यामि इति ॥

मूलारा—जं ते यत्त्वया। वूढा कृता ॥

अर्थ—हे निर्दोषचारित्र धारक क्षपक, तू चार प्रकारके संघमें अर्थात् उनके समक्ष बडी प्रतिज्ञा धारण की है अर्थात् मैं रत्नत्रयका आराधना करूंगा ऐसी महाप्रतिज्ञा धारण की है उसका स्मरण कर

को णाम भडो कुलजो माणी थोलाइदूण जणमज्झे ॥
जुज्झे पलाइ आवडिदमेत्तओ चेव अरिभीदो ॥ १५१८ ॥

जनमध्ये भुजास्फालं विधाय वलगर्वितः ॥
क' कुलीनो रणे मानी शत्रुत्रस्त' पलायते ॥ १५७९ ॥

विजयोदया—को णाम भडो क पलायते युद्धे भट शूर । कुलजो मानी । थोलाइदूण भुजास्फालनं कृत्वा । जनमध्ये । एव युद्धे शत्रुपराजय करिष्यामीति उद्घुष्य आवडिदमेत्तओ अभिमुखायातशत्रुरेव अरिभीत. । क. पलायन करोति ॥

इत. क्षपक लोकप्रसिद्धदृष्टातसहत्या प्रवचेन प्रोत्साहयति—

मूलारा—माणी यशःसंपादनाहकारी । थोलाइदूण आत्मान स्तुत्वा । भुजास्फालन कृत्वा । एवं शत्रुपराजयं करिष्यामि इत्युद्घोष्येति यावत् । आवडिदमेत्तओ चेव मिलितमात्र एवारिणा सह अथवा अभिमुखायातमात्रादेवारेरिति योज्यम् ॥

अर्थ—" मैं शत्रुको अवश्य पराजित करूंगा " ऐसी प्रतिज्ञा जिसने भुजास्फालन करके सर्व जनसमक्ष की है ऐसा कोन स्वाभिमानी कुलीन शूर पुरुष शत्रु समीप आनेपर डरकर पलायन करेगा.

---

दार्ष्टान्तिके योजयति—

थोलाइदूण पुव्वं माणी संतो परीसहादीहिं ॥
आवडिदमित्तओ चेव को विसण्णो हवे साहू ॥ १५१९ ॥

कः कृत्वा स्वस्तवं मानी संघमध्ये तपोधनः ॥
परीषहरिपुत्रस्तः क्लिश्यत्यापातमात्रत' ॥ १५८० ॥

विजयोदया—थोलाइदूण पुव्व भुजास्फालन कृत्वा पूर्वं । परीसहादीहिं आवडिदमेत्तगो चेव परीषहारातिभिरभिमुखायात एव । को विसण्णो हवे साहू माणी सतो को विषण्णो भवेत्साधुवर्गो मानी सन् ॥

एव दृष्टाते दर्शितमर्थं दार्ष्टान्तिके योजयति—

मूलारा—आवडिदमेत्तओ परीषहारिभिर्मिलितमात्रकः । विसण्णो दु'खितः ।

अर्थ—सर्व संघके समक्ष परीषह और उपसर्ग आनेपर भी मैं प्रत्याख्यात आहारादिक पदार्थोंका स्वीकार न करूंगा ऐसी प्रतिज्ञा लेकर परीषहादिक आतेही कोनसा साधु दुःखी होकर स्वप्रतिज्ञाका त्याग करेगा ? अर्थात् अपनी प्रतिज्ञामें परीषहादिक आनेपर भी दृढता धारण कर उसको नष्ट न करेगा.

---

आवडिया पडिकूला पुरओ चेव क्कमंति रणभूमिं ॥
अवि य मरिज्ज रणे ते ण य पसरमरीण वड्ढंति ॥ १५२० ॥

प्रविशंति रणं पूर्वं शत्रुमर्दनलालसाः ॥
यच्छन्ति नासुनाशेऽपि शत्रूणां प्रसरं पुनः ॥ १५८१ ॥

विजयोदया—आवडिदा पडिकूला अभिमुखायाता शत्रवः। पुरदो चेव क्कमति रणभूमिं पुरस्तादेवोपसर्पन्ति रणभूमिं। अवि य मरिज्ज रणे यद्यपि रणे म्रियन्ते। ण य पसरमरीण वड्ढन्ति नैव प्रसरमरीणां वर्धयन्ति ॥

मूलारा—आवडिदप्पडिकूला आपतिता अभिमुखा जाताः प्रतिकूलाः शत्रवो येषा सुभटाना ते । पुरदो चेव पूर्वमेव शत्रुभिरनाक्रातमेवेति भावः ॥ क्कमति आक्रामति । रणभूमिं युद्धाय कल्पिता भुव । मरेज्ज म्रियेरन् । पसर उत्साह । वड्ढति वर्धयति ।

अर्थ—हल्ला करनेवाले शत्रु युद्धभूमीमें आगे आगे ही पैर बढाते हैं कदाचित् युद्धमें शत्रु प्रहारसे मरणका स्वीकार करेंगे परंतु अपने प्रतिपक्षीका उत्साह बढेगा ऐसा कार्य वे कदापि नहीं करेंगे अर्थात् रणभूमीसे पलायन नहीं करेंगे.

---

तह आवडिदप्पडिकूलदाए साहू विमाणिणो सूरा ॥
अइतिव्ववेयणाओ संहति ण य विगडिमुवयांति ॥ १५२१ ॥

मानिनो योगिनो धीराः परीषहनिषूदिनः ॥
सहन्ते वेदना घोराः प्रपद्यन्ते न विक्रियाम् ॥ १५८२ ॥

विजयोदया—तह आवइ पडिकूलदाए तथा आपत्प्रतिकूलतया। साधवो मानिनः शूराः । अदितिव्ववेदणाओ अतीव तीव्रवेदना । सहति सहते। ण य विगडिमुवयाति नैव विकृतिमुपयाति ॥

मूलारा—आवडिदप्पडिकूलदाए आपतिता दुर्दैववशादुपस्थिताः प्रतिकूला उपसर्गपरीषहा येषां ते आपतितप्रतिकूलास्तेषा भाव आपतितप्रतिकूलता तस्या सत्या । उपसर्गपरीषहेषु उपस्थितेषु सत्स्विति यावत् । अन्ये तु आवइ पडिकूलत्ताए इति पठित्वा आपत्प्रतिकूलतयेत्यर्थमाहुः । विगादि रत्नत्रयविराधनं ॥

अर्थ—वैसे पूर्वकृत अशुभ कर्मके उदयसे परीषहादिक अति तीव्र दु ख देनेपर भी अर्थात् उनसे अतितीव्र वेदना होनेपर भी साभिमानी साधुगण सब सहलेते हैं परतु वे विकार को प्राप्त होकर रत्नत्रयाराधनाका त्याग नहीं करते हैं

---

थोलाइयस्स कुलजस्स माणिणो रणमुहे वरं मरणं ॥
ण य लज्जणयं काउं जावज्जीव सुजणमज्झे ॥ १५२२ ॥
रणारंभे वरं मृत्युर्भुजास्फालनकारिणः ॥
यावज्जीव कुलीनस्य न पुनर्जनजल्पनम् ॥ १५८३ ॥

विजयोदया—थोलाइयस्स कृतभुजास्फालनस्य। माणिणो मानिन । रणमुहे वरं मरणं युद्धमुखे शोभन मरण। ण य वरं नैव शोभन। लज्जणयं कादु जावज्जीव च सुजणमज्झे सुजनमध्ये यावज्जीव निंदाकरण ॥

मूलारा—थोलाइदस्स कृतभुजास्फालनस्य । वरं शोभन । लज्जणयं लज्जाकारकं । धर्मपलायनमित्यर्थः ॥

अर्थ––जिसने भुजास्फोट कर शत्रुको जीतनेकी प्रतिज्ञा की है ऐसे कुलीन स्वाभिमानी मनुष्यका रणमें मर जाना भी भला है. परंतु सज्जनोंमें जिससे निंदा होगी ऐसा कार्य अर्थात् रणसे भागना, शत्रुको पीठ दिखाना कभी भी भला नहीं है. क्यों कि ऐसे कार्यसे आजन्म निंदा होती है.

---

समणस्स माणिणो संजदस्स णिहणगमणं पि होइ वरं ॥
ण य लज्जणयं कादुं कायरदादीणकिविणत्तं ॥ १५२३ ॥
संयतस्य वर मृत्युर्मानिनोऽसकताडिनः ॥
न दीनत्वविषण्णत्वे परीषहरिपूदये ॥ १५८४ ॥

विजयोदया—समणस्स समानस्य श्रवणस्य वा । माणिणो मानिन', संजदस्स संयतस्य । णिधणगमणं पि होदि वर निधनगमनमपि भवति वर । ण य लज्जणग कादु नैव लज्जनीयकरण शोभन । कातरता न वर । दीणकिविणत्तं दीनत्व कृपण त्व च न वर ॥

मूलारा—णिधणगमण मरणापत्तिः । कादरदा चित्तभीरुता । दीणकिविणत्तं दीनत्वं, वैवर्ण्यं, कृपणत्व किमपि कर्तुं न शक्नोमि इति वचन ॥

अर्थ—रागद्वेप रहित, अपनी प्रतिज्ञापर अटल रहनेवाले ऐसे मुनिका मरण होना मी भला है जिससे लज्जित होना पडेगा ऐसा कार्य–रत्नत्रयाराधनासे च्युत होना–कभीभी योग्य नहीं है चित्तमें मय उत्पन्न होना, मुख भयसे सूखना, मैं असमर्थ हू प्रतिज्ञा धारण करनेमें समर्थ नहीं हूं इत्यादिवचन बोलना निंद्य है

---

एयस्स अप्पणो को जीविदहेदुं करिज्ज जंपणय ॥
पुत्तपउत्तादीणं रणे पलादो सजणलंछं ॥ १५२४ ॥

वर मृत्युः कुलीनस्य पुत्रपौत्रादिसंततेः ॥
न युद्धे नश्यतोऽरिभ्यः कर्तुं स्वकुललांछनम् ॥ १५८५ ॥

विजयोदया—एयस्स अप्पणो एकस्यात्मन । जीविदहेदु जीवितनिमित्त । को करिज्ज जपणग क कुर्यादपवाद । पुत्तपउत्तादीण पुत्रपौत्रादीनां । रणे पलादो रणात्पलायमान । सजणलछ स्वजनलाछन ॥

मूलारा—जपणयं अपवादं । पउत्तादीण पौत्रप्रपौत्रादीना । पलंतो पलायमानः । अन्य' पलादो इति पठित्वा पलाय्येत्यर्थमाह । सुणगलछं ललाटे कुर्कुरदाहसमानं ॥

अर्थ—अकेले अपने जीवितके लिये कोन मानी पुरुप अपवादका–निंदाका कार्य करेगा, ऐसे अकार्य से अर्थात् रणसे भागने के कार्यसे पुत्र पौत्रादिक तक अकीर्ति रहा करती है अर्थात् पुत्र पौत्रदिक मी अपने पूर्वजोंकी अकीर्तिसे दु'खी होते हैं, उनको लज्जित होना पडता है

---

तह अप्पणो कुलस्स य संघस्स य मा हु जीवदत्थं तं ॥
कुणसु जणे जंपणयं किविणं कुव्व सगणलंछं ॥ १५२५ ॥

मा कार्षीर्जीवितार्थं त्व दैन्यं स्वकुललांछनम् ॥

कुलस्य स्वस्य संघस्य मा गास्त्वं वेदनावशम्॥ १५८६ ॥

विजयोदया—तह तथा । अप्पणो जीविदत्थ भवतो जीवितार्थं । कुलस्स सघस्स य मा कुणसु जणे दूसणय कुलस्य सघस्य च दूपण जने मा कार्पी । किविण कुव्व कृपणत्व कुर्वन् । सगणलछ स्वगणलाछन ॥

मूलारा—किवण कुव्व कृपणत्वं कुर्वन् । परीपहादिविनिपाते हीनसत्वता विदधत् ।

अर्थ—वैसे हे क्षपक ! तुम अपने जीवितके लिये अपने कुल और संघको दूषण उत्पन्न होगा ऐसा कार्य मत करो अर्थात् तुम अपनी प्रतिज्ञामें दृढ रहो मेरेसे प्रतिज्ञाका पालन नहीं होता है ऐसा दीनवचन कहोगे तो तुमारे संपूर्ण गणको लज्जित होना पडेगा.

---

गाढप्पहारसंताविदा वि सूरा रणे अरिसमक्खं ॥

ण मुह भंजति सयं मरति भिउडीए सह चेव ॥ १५२६ ॥

म्रियते समरे वीरा· प्रहाराकुलिता अपि ॥

कुर्वन्ति भ्रकुटीभंग न पुनर्वैरिणां पुरः ॥ १५८७ ॥

विजयोदया—गाढप्पहारसताविदा वि गाढप्रहारसतापिता अपि शूरा रणे युद्धे । सग मुह अरिसमक्खं ण भजति स्वमुखभग अरीणा पुरतो न कुर्वन्ति । मरति म्रियते । भिगुडीए सह चेव भ्रकुट्या सह चैव ॥

मूलारा—भंजति वक्रयति । सयं स्व मुख । भिउडिमुहा भ्रूकुटयो मुखेपु येपा ते भ्रूकुट्या सहैव म्रियते इत्यर्थः ॥

अर्थ—शूर पुरुप रणमें गाढ शस्त्रप्रहार होनेसे शत्रुके समक्ष मुख फिराकर भागते नहीं है. वे अपनी भोंहें टेडी करके मरण का ही अंगीकार करते हैं.

---

सुट्ठु वि आवइपत्ता ण कायरत्तं करिंति सप्पुरिसा ॥

कत्तो पुण दीणत्त किविणत्त वा वि काहिंति ॥ १५२७ ॥

कातरत्वं न कुर्वन्ति परीषहकरालिता· ॥

किं पुनर्दीनतादीनि करिष्यन्ति महाधिय· ॥१५८८ ॥

विजयोदया—सुठ्ठु वि आवइपत्ता नितरमापदं प्राप्ता अपि । सप्पुरिसा ण कायरत्तं करंति सत्पुरुषा न कातरता कुर्वन्ति । कत्तो पुण काहिंति कुत. पुन करिष्यन्ति । दीणत्त किविणत्त चावि दीनता कृपणता च ॥

मूलारा—सुट्ठुवि आवदि पत्ता नितरा आपद प्राप्ता अपि ॥

अर्थ—अतिशय विपत्ति प्राप्त होने पर भी सत्पुरुष डरते नहीं हैं तो वे असमर्थता और दीनता क्यों दिखायेंगे ?

---

कोई अग्गिमदिगदा समंतओ अग्गिणा वि डज्झंता ॥
जलमज्झगदा व णरा अत्थंति अचेदणा चेव ॥ १५२८ ॥
अग्निमध्यगता.केचिद्दह्यमानाः समंततः ॥
अवेदना वितिष्ठन्ते जलमध्ये गता इव ॥ १५८९ ॥

विजयोदया—कोई अत्थति अचेदणा चेव केचिदासते अचेतना इव । अग्गिमदिमदा अग्निं प्रविष्टा । समंतदो अग्गिणा वि डज्झंता समंतात् अग्निना अपि ( जलमज्झगदा व णरा जलमध्यगता नरा इव । अचेतना इव ॥

मूलारा—अग्गिमदिगदा अग्निं प्रविष्टाः ॥

अर्थ—कितनेक पुरुष अग्निके वीचमें पडनेपर और चारों तरफसे अग्नि लगने पर भी अर्थात् उसके दाह-से दग्ध होनेपर भी मानो जलमें प्रवेश किये पुरुष के समान अथवा अचेतन पदार्थके समान स्थिर रहते हैं

---

तत्थ वि साहुकार सगअगुलिचालणेण कुव्वंति ॥
केई करंति धीरा उक्किट्ठिं अग्गिमज्झम्मि ॥ १५२९ ॥
साधुकार परे तत्र कुर्वन्त्यंगुलिनर्तनैः ॥
आनंदितजनस्वान्ता उत्कृष्टिं कुर्वते परे ॥ १५९० ॥

विजयोदया—तत्थ वि तत्राप्यग्निमध्ये । साहुकारं सगअंगुलिचालणेण कुव्वति साधुकारं स्वांगुलिचालनया कुर्वते । केई अग्गिमज्झगदा धीरा केचिदग्निमध्यगता धीराः । उक्किट्ठिं करति उत्क्रोशनं कुर्वन्ति॥

मूलारा—तध वि य यद्यपि अग्निमध्यगतास्तथापि । साधुकारं भद्रकं भवतीद यदशुभं कर्म क्षयं यातीति प्रशंसा । सगमंगुलिचालणेण स्वाङ्गुलिनर्तनेन । नखच्छोटिकयेत्यन्यः । केई एतदुभयत्र योज्यं । उक्किट्टिं उत्क्रोशनं । विशिष्टशब्दकलकल- मित्यर्थः ।

अर्थ—उस अग्नीमें भी अपनी अंगुलियां हिलाकर कोई धीर पुरुष अच्छा ही हुआ ऐसा सूचित करते हैं इस उपसर्गसे मेरा कर्म क्षयको प्राप्त होगा. यह अग्नि मेरे कर्मको नष्ट करता है इसका हमारे ऊपर बडा उपकार हो रहा है. ऐसा अगुलियां हिलाकर सूचित करते हैं. कोई धीर पुरुष आनदसे विशिष्ट शब्द करते हैं.

---

जदिदा तह अण्णाणी संसारपवड्ढणाए लेस्साए ॥
तिव्वाए वेदणाए सुहसाउलया करिंति धिदिं ॥ १५३० ॥

वेदनायामसह्यायां कुर्वन्त्यज्ञानिनो धृतिम् ॥
लेश्यया भववर्द्धिन्या सुखास्वादपरा यदि ॥ १५९१ ॥

विजयोदया—जदिदा यदि तावत् । तह तथा अण्णाणीधिदिं करिंति तथा अज्ञानिनो धृतिं कुर्वन्ति । संसारपवड्ढणाए लेस्साए संसारप्रवर्द्धनकारिण्या लेश्यया । तिव्वाए वेदणाए तीव्राया वेदनाया सत्या । सुहसाउलगा सुखास्वादन लंपटा ॥

मूलारा—तध तेन साधुकारकरणादिप्रकारेण । संसारपवड्ढणाए ससारप्रवर्धनकारिण्या । सुहसाउलगा सुखा- स्वादनलंपटाः ।

अर्थ—ससारको बढानेवाली लेश्यासे युक्त होकर भी उपसर्गसे तीव्र वेदना होनेपर भी यदि सुखास्वाद करनेमें लंपट अज्ञानी पुरुष धैर्य धारण कर दुःख सहन करते हैं तो—

---

किं पुण जदिणा संसारसव्वदुक्खक्खयं करंतेण ॥
बहुतिव्वदुक्खरसजाणएण ण धिदी हवदि कुज्जा ॥ १५३१ ॥

तदा धृतिं न कुर्वन्ति किं भवच्छेदनोद्यताः ॥
ज्ञातसंसारनैःसार्या वेदनायां तपोधनाः ॥ १५९२ ॥

विजयोदया—किं पुण जदिणा ण करिज्जा हवदि धिदि किं पुनर्न कार्या भवति धृति यतिना। कीदृशा? ससारसव्वदुक्खक्खयं करतेण ससारसर्वदु खक्षयं कुर्वता। वहुतिव्वदुक्खरसजाणगेण वह्वनां चतुर्गतिगतानां दु खानां रस जानता ॥

मूलारा—रसजाणएण स्वादवेदिना। कुज्जा कर्तव्या।

अर्थ—सपूर्ण दु खोंका रस जाननेवाले यति क्यों न धैर्य धारण करे. अर्थात् जब कोई अज्ञानी भी जीव धैर्य धारण कर दुःख सहते हैं तो वैराग्यशील यतिओंका दुःख सहन करना कर्तव्य ही ठहरा दुःखसे भययुक्त होना उनके लिए नितरां अयोग्य है.

---

अिसवे दुब्भिक्खे वा कंतारे वा भएव आगाढे ॥
रोगेहिं व अभिभूदा कुलजा माणं ण विजहंति ॥ १५३२ ॥
दुर्भिक्षे मरके कक्षभये रोगे दुरुत्तरे ॥
मानं क्वापि विमुंचंति कुलीना जातु नापदि ॥ १५९३ ॥

विजयोदया—असिवे मार्यां। दुब्भिक्खे वा दुर्भिक्षे वा। कंतारे अटव्या वा। गाढे भये च। उपर्युपरि निपतितभये वा। रोगेहिं व अभिभूदा व्याधिभिर्वा अभिभूताः। ण विजहंति कुलजा माणं न विजहति कुलप्रसूता मानं ॥

मूलारा—असिवे मार्यां। आगाढे उपर्युपरि निपतति सति। अनिवार्येण।

अर्थ—मारी, दुर्भिक्ष, गहन अरण्य, पुनः पुनः भय प्राप्त होना, रोगोंसे पीडित होना इत्यादि प्रसंगपर कुलवान् मनुष्य अभिमान छोडते नहीं है

---

ण पियंति सुरं ण य खंति गोमयं ण य पलंडुमादीयं ॥
ण य कुव्वंति विकम्मं तहेव अण्णंपि लज्जणयं ॥ १५३३ ॥
सेवंते मद्यगोमांसपलांडूादि न मानिनः ॥
कर्मान्यदपि कृच्छ्रेऽपि लज्जनीयं न कुर्वते ॥ १५९४ ॥

विजयोदया—ण पिवति सुर न पिवति सुरा । ण खाति न च भक्षयंति गोमास । ण य पलंडुमादीयं न पलांडु प्रभृतिकं भक्षयति । ण य कुव्वति विकम्म नैव कुर्वन्ति कुत्सित कर्म परोच्छिष्टभोजनादिक न कुर्वन्ति । तहेव अण्णंपि लज्जणय तथैव नान्यदपि लज्जनीय कुर्वंति ॥

मूलारा—ण य खंति नच भक्षयंति मानिन । गोमासमित्यर्थ । पलाडुमादीयं लशुनगृंजनप्रभृतिकं । विकम्मं कुत्सितं कर्म परोच्छिष्टभोजनादिकं ॥

अर्थ—कुलीन मनुष्य कभी मदिरापान नहीं करते हैं गोमास भक्षण नहीं करते हैं प्याज, लहसन, वगैरह कंदोंका भक्षण नहीं करते हैं तथा वे दूसरोंका उच्छिष्टान्न भक्षणादिक कर्म नहीं करते हैं. वैसा अन्य भी लज्जा उत्पन्न करनेवाले कर्म वे करते नहीं. तो—

किं पुण कुलगणसंघजसमाणिणो लोयपूजिदा साधू ॥
माणं पि जहिय काहंति विकम्म सुजणलज्जणय ॥ १५३४ ॥

कुलसंघयशस्कामा किं कर्म जगदर्चिता: ॥
मान विमुच्य कुर्वन्ति लज्जनीयं तपोधना ॥ १५०५ ॥

विजयोदया—किं पुण साहू वि कम्म काहिंति कि पुन साधव कुत्सित कर्म करिष्यति । कुलगुणसंघस्स जसमाणिणो कुलस्य संघस्य च यश संपादनाहंकारवत । लोगपूजिदा साधू लोके कृतपूजा । माण विजहिय मानं त्यक्त्वा जणलज्जणय साधु जनेन विलज्जनीय कर्म ॥

मूलारा—जसमाणिणो यश संपादनाहंकारवंत ॥

अर्थ—कुल, गण, संघ इनकी यशोवृद्धि चाहनेवाले साधुगण क्या कुत्सित कर्म कभी करेंगे? कभी भी नहीं करेंगे सत्पुरुषोंके द्वारा निंद्य ऐसा कर्म लोकवंद्य साधु मानका त्याग कर करेंगे क्या? कभी भी नहीं करेंगे

जो गच्छिज्ज विसादं महल्लमप्प व आवदि पत्तो ॥
त पुरिसकादरं विंति धीरपुरिसा हु सढत्ति ॥ १५३५ ॥

लघ्वीं विपत्तिमुर्वीं वा यः प्रयातो विषीदति ॥
नरा वदन्ति तं षंढं धीराः पुरुषकातरम् ॥ १५९६ ॥

विजयोदया—जो गच्छिज्ज विसादं यो गच्छेद्विषादं। महल्लं अप्प व आवइ पत्तो महतीं अल्पा वा आपदं प्राप्त ॥ तं पुरिसकातरं पुरुषेषु कातर। धीरपुरिसा संढुत्ति विंति धीरा सुपुरुषा. षढ इति ब्रुवन्ति ॥

आपदि विषीदतोऽपवाद दर्शयति—

मूलारा—विसाद विषादं। आवदिं आपद। पुरिसकादरं पुरुषेषु कातरं। सढोत्ति नपुंसकमित्ति ब्रुवंति ॥

अर्थ—जो छोटी या बडी आपत्ति आनेपर खिन्न होता है धीर पुरुष उसको कातर—डरपोक मनुष्य ऐसा कहते हैं तथा उसको पंढ कहते हैं.

---

मेरुव्व णिप्पकपा अक्खोभा सागरुव्व गंभीरा ॥
धिदिवंतो सप्पुरिसा हुंति महल्लावईए वि ॥ १५३६ ॥
समुद्रा इव गंभीरा निःकम्पाः पर्वता इव ॥
विपद्यपि महिष्ठायां न क्षुभ्यन्ति महाधियः ॥ १५९७ ॥

विजयोदया—मेरुव्व णिप्पकपा मेरुरिव निश्चला । अक्खोभा अकंपा. । सागरोव्व सागर इव धिदिवंतो सप्पुरिसा धृतिमत. संतोषवंत. सत्पुरुषा.। महल्लावईए वि महत्यामापदि अपि ॥

सत्पुरुषसद्वृत्तख्यापनेन विपदि धैर्यमवलम्बयति—

मूलारा—महल्लावदीए वि महत्यामप्यापदि। अक्षोभ्या क्षोभयितुमशक्याः। अचाल्यचित्ता भवंतीति संबंधः। उक्तं च—

समुद्रा इव गभीरा निष्कंपाः पर्वता इव ॥
विपद्यपि महिष्ठाया न क्षुभ्यंति महाधियः ॥

अर्थ—बडी आपत्ति आनेपर भी धैर्ययुक्त, संतुष्ट सत्पुरुष मेरुके समान निश्चल रहते हैं और समुद्रके समान क्षोभरहित होते हैं

केई विमुत्तसंगा आदारोविदभरा अपडिकम्मा ॥
गिरिपब्भारमभिगदा बहुसावदसंकडं भीमं ॥ १५३७ ॥

स्वारोपितभरा· केचिन्निःसंगा निःप्रतिक्रियाः ॥
गिरिप्राग्भारमापन्नाश्चित्रश्वापदसंकटम् ॥ १५९८ ॥

विजयोदया—केई उत्तमट्ठ साधेंति इति वक्ष्यमाणेन सबंध । केचिदुत्तम वस्तु रत्नत्रयं साधयन्ति । कीदृग्भूता· ? विमुत्तसंगा निष्परिग्रहा । आदारोविदभरा आत्मारोपितभरा । अपडिकम्मा निष्प्रतीकारा। गिरिपब्भारम भिगदा गिरिप्राग्भारमभिगता । कीदृश ? बहुसावदसंकडं बहुव्यालमृगाकुल । भीमं भयावह ॥

महासत्वाना महोपसर्गेऽपि रत्नत्रयसाधननिर्वाहं गाथाद्वयेन प्रकाशयति—

मूलारा—आदारोविदभरा आत्मन्यारोपितकरणीयभारा· । अपडिकम्मा अप्रतीकाराः। गिरिपब्भारं पर्वतगुहा। अदिगदा प्रविष्टाः

अर्थ—कितनेक सत्पुरुष संपूर्ण परिग्रहोंका त्याग कर तथा संपूर्ण कार्य अपने ऊपर लेकर आपत्तिको दूर करनेके लिए कुछ भी प्रयत्न नहीं करते हैं और जहां बहुत हिंस्रजीव निवास करते हैं ऐसे पर्वतोंकी गुहामें जाकर उत्तम वस्तुकी प्राप्ति कर लेते हैं. अर्थात् रत्नत्रयको साध लेते हैं

---

धिदिधणियबद्धकच्छा अणुत्तरविहारिणो सुदसहाया ॥
साहिंति उत्तमट्ठ सावददाढंतरगदे वि ॥ १५३८ ॥

राद्धान्तसचिवा· सन्तः सन्तुष्टा· शुद्धवृत्तयः ॥
साधयन्ति स्थिताः स्वार्थं व्यालदन्तान्तरेष्वपि ॥ १५९९ ॥

विजयोदया—धिदिधणियबद्धकच्छा धृत्या नितरा बद्धकक्ष्या । अणुत्तरविहारिणो प्रकृष्टचारित्रा । सुदसहायाः श्रुतज्ञानसहाया । साधिंति उत्तमट्ठ साधयत्युत्तमार्थ रत्नत्रयं । सावददाढतरगदा वि श्वापददंष्ट्रामध्यगता अपि ॥

मूलारा—बद्धकच्छा स्वीकृतबला· कृतप्रतिज्ञा वा । अणुत्तरविहारिणो उत्कृष्टचारित्राः ॥

अर्थ—जिन्होंने अलौकिक धैर्य धारण किया है, जिनका चारित्र उत्कृष्ट है. तिलमात्रभी जिसमें दोष नहीं

है ऐसे चारित्रके धारक, श्रुतज्ञानकी मदत जिनको मिली है ऐसे मुनिराज क्रूर प्राणिओंके दाढमें चले जाने पर भी रत्नत्रयकी सिद्धि कर ही लेते हैं

---

भल्लुंकिए तिरत्तं खज्जंतो घोरवेदणट्टोऽवि ॥
आराधणं पवण्णो ज्झाणेणावंतिसुकुमालो ॥ १५३९ ॥

धीरोऽवन्तिकुमारोऽगात्रिरात्रं शुद्धमानसः ॥
शृगाल्या खाद्यमानोऽपि देवीमाराधनां प्रति ॥ १६०० ॥

विजयोदया—भल्लुंकिए तिरत्त खज्जतो शृगालेन तिसृषु रात्रिषु भक्ष्यमाण.। घोरवेदणट्टो वि घोरवदनायाधितोऽपि। आराधण पवण्णो ज्झाणेण शुभध्यानेनाराधना प्रपन्न । क ? अवतिसुकुमालो अवतिसुकुमारः ॥

उपसर्गसहानामर्थाख्यानान्युपन्यस्यति—

मूलारा—भल्लुक्कीए शृगाल्या। तिरत्त त्रिरात्रं। वेदणट्टो वेदनार्त.। अवति उज्जयिन्यां। सुकुमालो सुकुमारस्वामी।

अर्थ—शृगालीके द्वारा तीन रात्रतक जो खाये गये, जिनके प्रत्यंगोंमे तीव्र वेदनायें हो रही थी, ऐसे भी अवंति सुकुमार मुनि शुभध्यानसे रत्नत्रयाराधनाको प्राप्त हो गये. ( इनकी कथा तथा आगेके उदाहरणोंकी कथायें आराधना कथाकोषोंमें हैं )

---

मोग्गिलगिरिम्मि य सुकोसलो वि सिद्धत्थदइय भयवंतो ॥
वग्घीण वि खज्जंतो पडिवण्णो उत्तमं अट्ठं ॥ १५४० ॥

शिश्रायाराधनां देवीं मुद्गलाद्रौ सुकोशलः ॥
भक्ष्यमाणो मुनिर्व्याघ्न्या सैद्धार्थिरविषण्णधीः ॥ १६०१ ॥

विजयोदया—मुद्गलगिरौ सुकोशलोऽपि सिद्धार्थस्य पुत्रो भगवान् व्याघ्न्या जननीचर्या भक्षित सन् प्रतिपन्नश्च उत्तमार्थं ॥

मूलारा—मोग्गिलगिरिम्मि मुद्गलाख्यगिरौ। सिद्धत्थदइदगो सिद्धार्थस्य वल्लभ पुत्रत्वात्। वि खज्जतो खाद्यमानोऽपि।

अर्थ—मुद्गल नामक पर्वत पर सिद्धार्थ राजाके पुत्र सुकोशल नामके मुनिराज को पूर्व जन्ममें माता

थी एसी व्याघ्रीने भक्षण किया, तो भी उन्होंने शुभध्यानसे रत्नत्रयकी प्राप्ति की अर्थात् इस तिर्यंच कृत उपसर्गसे वे रत्नत्रयसे भ्रष्ट नहीं हुए

---

भूमीए समं कीलाकोट्टिददेहो वि अल्लचम्मं व ॥
भयवं पि गयकुमारो पडिवण्णो उत्तमं अट्ठं ॥ १५४१ ॥

धरण्यामार्द्रचर्मेव किल कीलितविग्रहः ॥
प्रापद्गजकुमारोऽपि स्वार्थं निर्मलमानसः ॥ १६०२ ॥

विजयोदया—भूमीए समं भूमौ समं । कीलाकोट्टिददेहो कीलोत्कृतदेहः । अल्लचम्मं व आर्द्रचर्मवत् । भयवपि भगवान् गजकुमारोऽपि । उत्तमार्थं प्रतिपन्नः ॥

मूलारा—कीलाकोट्टिदः कीलैः प्रसार्य कीलितः ॥

अर्थ—गीले चमडेके समान कीले ठोककर जिनको जमीनके साथ एक कर दिया है ऐसे भगवान गजकुमार मुनीने उत्तमार्थ को रत्नत्रयको साध लिया अर्थात् रत्नत्रय प्राप्तिके द्वारा वे मुक्त होगये

---

कच्छुजरखाससोसो भत्तच्छदुच्छिकुच्छिदुक्खाणि ॥
अधियासयाणि सम्म सणक्कुमारेण वाससयं ॥ १५४२ ॥

कासशोपारुचिश्छर्दिकच्छुप्रभृतिवेदनाः ॥
सोढाः सनत्कुमारेण यतिना शरदां शतम् ॥ १६०३ ॥

विजयोदया—कच्छुजरखाससोसो कच्छूज्वरकासशोषाः । भत्तच्छदुच्छिकुच्छिदुक्खाणि तीव्रो जठराग्नि अक्षिकुक्षि दुःखं च । अधियासयाणि असंक्लेशेन धृतानि सणक्कुमारेण सनत्कुमारेण । वाससद वर्षशत ॥

मूलारा—कच्छू कडूः । जर ज्वरः । भत्तच्छदुच्छिकुच्छिदुक्खाणि तीव्रजठराग्निनेत्रोदरबाधाः । अन्ये अभत्तच्छदि इति पठित्वा अभक्तसमरुचिः । छदि छर्दिरित्यर्थमाहुः । अधियासिदा सोढानि । सम्मं निःसंक्लेशं । वाससदं वर्षशतम् ॥

अर्थ--कच्छु, ज्वर, खासी, श्वास, भस्मक व्याधि, आंखके रोग, इत्यादिक रोगोंसे होनेवाली पीडा सनत्कुमार मुनीने जो कि गृहस्थावस्थामे चक्रवर्ती थे सो वर्ष तक संक्लेश परिणामके विना धारण की परंतु रत्नत्रयका त्याग नहीं किया.

---

णावाए णिव्वुडाए गंगामज्झे अमुज्झमाणमदी ॥
आराधणं पवण्णो कालगओ एणियापुत्तो ॥ १५४३ ॥

गंगायां नावि मग्नायां एणिकातनयो यतिः ॥
अमूढमानसः स्वार्थं साधयामास शाश्वतम् ॥ १६०४ ॥

विजयोदया—णावाए णिव्वुडाए नावि निमग्नायां च । गंगामज्झे गंगाया मध्ये । अमुज्झमाणमदी अमुह्यमानमतिः। आराधणं पवण्णो आराधना प्रतिपन्नः । कालगओ सन् । कालं गतः । एणियापुत्तो एणिकपुत्रनामधेयो यतिः ॥

मूलारा--कालगदं मरणं प्राप्तः । एणियापुत्तो एणिकापुत्राख्यो मुनिः ॥

अर्थ—एणिकापुत्र नामके यतिराज नावमें आरोहण कर गंगाके दूसरे किनारे पर जारहे थे तब वह नाव गंगामें डूब गई परंतु मुनिराजकी बुद्धि में जरासाभी मोह उत्पन्न नहीं हुआ और वे आराधनाप्राप्ति कर मर गये

---

ओमोदरिए घोराए भद्दबाहू असंकिलिट्ठमदी ॥
घोराए तिगिंच्छाए पडिवण्णो उत्तमं ठाणं ॥ १५४४ ॥

अवमोदर्यमंत्रेण भद्रबाहुर्महामनाः ॥
बुभुक्षाराक्षसीं जित्वा स्वीचकारार्थमुत्तमम् ॥ १६०५ ॥

विजयोदया—ओमोदरिए घोराए घोरेणावमोदर्येण तपसा समन्वितः । भद्दबाहू असंकिलिट्ठमदी भद्रबाहुरसंक्लिष्टचित्त । घोराए तिगिंच्छाए घोरया क्षुधा बाधितोऽपि । पडिवण्णो उत्तमं ठाणं प्रतिपन्न उत्तमार्थं ॥

मूलारा—ऊमोदरिए अवमोदर्येण तपोविशेषेण विशिष्टः । तिगिंछाए बुभुक्षया ॥

अर्थ—घोर अवमोदर्य तप करनेवाले भद्रबाहु मुनि तीव्र भूखसे पीडित होनेपर भी संक्लेश परिणाम के वश नहीं हुए और उन्होने रत्नत्रय को प्राप्त कर लिया.

---

कोसंबीललियघडा वूढा णइपूरएण जलमज्झे ॥
आराधणं पवण्णा पावोवगदा अमूढमदी ॥ १५४५ ॥
चंपाए मासखमणं करित्तु गंगातडम्मि तण्हाए ॥
घोराए धम्मघोसो पडिवण्णो उत्तमं ठाणं ॥ १५४६ ॥

मासोपवाससंपन्नश्चंपायां तृड्ज्वरार्दितः ॥
धर्मघोषो मुनिः प्राप्तः स्वार्थं गंगानदीतटे ॥ १६०६ ॥

विजयोदया—चपाए चपानगर्यां । मासखवण करित्तु मासोपवासं कृत्वा । गंगातडम्मि गंगायास्तटे । तण्हाए घोराए तृष्णया तीव्रया बाधितोऽपि । धम्मघोसो धर्मघोष । उत्तमार्थं प्रतिपन्न ।

मूलारा—-कोसवी कौशाम्ब्यां नगर्यां । ललिद्घडा ललिताः सुखवर्द्धिताः इंद्रदत्तादयो द्वात्रिंशदिभ्याः श्रावकाः तेषां घटाः समुदायाः । णदिपूरगेण यमुनाप्रवाहेण । पाओवगदा प्रायोपगमनमरण प्राप्ताः । एता श्रीविजयो नेच्छति ॥

मूलारा—-मासखमण मासोपवास । करित्तु कृत्वा ॥

अर्थ—कौशांबी नगरीमें ललित घट नामके मुनिओंका समुदाय नदीके प्रवाहसे बह गया तो भी संक्लेश परिणामके वश वह नहीं हुआ

तात्पर्य—सुखसे जिनके दिन व्यतीत होगये थे ऐसे इंद्रदत्तादिक बत्तीस श्रीमत वैश्यपुत्र थे. उन्होंने दीक्षा लेकर यमुना नदीके तटपर तप किया. एक दिन वे सब यमुनानदीके प्रवाहसे बह गये परतु रत्नत्रयमें स्थिर रहकर उन्होंने प्रायोपगमन मरण प्राप्त कर लिया

चपानगरीमें एक महिनाके उपवास करके गगानदीके किनारेपर तीव्र प्याससे पीडित होनेपर भी धर्मघोष मुनिराजने असंक्लिष्ट परिणामोंसे उत्तमार्थ प्राप्त कर लिया

---

सीदेण पुव्ववइरियदेवेण विकुव्विएण घोरेण ॥
संतत्तो सिरिदत्तो पडिवण्णो उत्तमं अट्ठं ॥ १५४७ ॥

पूर्वकारातिदेवेन कृतैः शीतोष्णमारुतैः ॥
श्रीदत्तः पीड्यमानोऽपि जग्राहाराधनां सुधीः ॥ १६०७ ॥

विजयोदया—सीदेण शीतेन। संतत्तो संतप्तः। पुव्ववइरियदेवेण विकुव्विएण पूर्वजन्मशत्रुणा देवेनोत्पादितेन सिरिदत्त श्रीदत्त। उत्तमार्थमुपगत ॥

मूलारा—विउव्विदेण उत्पादितेन। सतत्तो पीडितः। सिरिदिण्णो श्रीदत्तः ॥

अर्थ—पूर्व जन्मका वैरी किसी देवने शीतजल वृष्टि, व शीत हवा उत्पन्न कर श्रीदत्तनामक मुनीको घोर दुःख दिया था तो भी इस मुनीश्वरने उत्तमार्थ प्राप्त कर ही लिया.

---

उण्हं वादं उण्हं सिलादलं आदवं च अदिउण्हं ॥
सहिदूण उसहसेणो पडिवण्णो उत्तमं अट्ठं ॥ १५४८ ॥

मारुतं ग्रैष्मकं तापं वह्नितप्तं शिलातलम् ॥
सोढ्वा वृषभसेनोऽपि स्वार्थं प्रापदनाकुलः ॥ १६०८ ॥

विजयोदया—उण्हं वादं उष्णं वात, उण्हं सिलादलं उष्णं शिलातल ॥ आदवं च अदिउण्हं आतापं चात्युष्णं सहिदूण प्रसह्य वृषभसेन उत्तमार्थं प्रतिपन्नः ॥

मूलारा—सिलादल शिलातलं। आदवं आतपं। उसभसेणो वृषभसेनः ॥

अर्थ—अतिशय उष्ण वायु, अग्नीसे गरम किया हुआ पर्वतका शिलातल और सूर्यसताप इन तापत्रयसे पीडित होनेपर भी वृषभदत्तने यह सब सह लिया तथा उत्तमार्थ को वश किया.

---

रोहेडयम्मि सत्तीए हओ कोंचेण अग्गिदइदो वि ॥
तं वेयणमधियासिय पडिवण्णो उत्तमं अट्ठं ॥ १५४९ ॥

अग्निराजसुतः शक्त्या विद्धः क्रौंचेन संयतः ॥
रोहेडकपुरे सोढ्वा देवीमाराधनां श्रितः ॥ १६०९ ॥

विजयोदया—रोहेडयम्मि रोहेडगे नगरे। सत्तीए हओ शक्त्या हतः। कोंचेण क्रौंचनामधेयेन। अग्गिदइदोवि अग्निराजसुतोऽपि। त वेदणमधियासिय ता वेदना प्रसह्य। उत्तमार्थं प्रतिपन्न ॥

मूलारा—रोहेडयम्मि रोहेटकनाम्नि नगरे। सत्तीए शक्त्या शस्त्रविशेषेण। कोंचेण क्रौंचनाम्ना राज्ञा। अग्गिदइदो अग्निराजनाम्नो राज्ञः पुत्रः कार्तिकेयसञ्ज्ञः। अधियासिय अध्यास्य प्रसह्येत्यर्थः।

अर्थ—रोहेड नगरमें क्रौंच राजाने अग्निराजाका पुत्र कार्तिकेय मुनिको शक्ति नामक शस्त्रसे मारा था तब मुनिराजने उस दुःखको सह कर रत्नत्रयकी प्राप्ति की

---

काइंदि अभयघोसो वि चडवेगेण छिण्णसव्वंगो ॥
त वेयणमधियासिय पडिवण्णो उत्तम अट्ठं ॥ १५५० ॥

काकंद्यां चडवेगेन छिन्ननिःशेषविग्रहः ॥
विषह्याभयघोषोऽपि पीडामाराधनां गतः ॥ १६१० ॥

विजयोदया—काइंदि अभयघोसो वि काकंद्यां नगर्यां अभयघोषोऽपि। चडवेगेण छिण्णसव्वंगो चडवेगेन छिन्नसर्वांगः ॥

मूलारा—काकंदि काकंद्यां नगर्यां। अभयघोसो अभयघोषः ॥ चडवेगेण चडवेगनाम्ना राजपुत्रेण ॥

अर्थ—काकंदी नामक नगरमें चंडवेग नामक दुष्ट राजपुत्रने अभयघोष मुनि के सर्व अंगोंको छेद डाला था तो भी वह तीव्र वेदना उन्होंने सह कर उत्तमार्थकी प्राप्ति कर ली

---

दंसेहिं य मसएहि य खज्जतो वेदणं परं घोरं ॥
विज्जुच्चरोऽधियासिय पडिवण्णो उत्तमं अट्ठ ॥ १५५१ ॥

प्रपेदे मशकैर्दंशैः खाद्यमानो महामनाः ॥
विद्युच्चोरमुनिः स्वार्थं सोढदुःसहवेदनः ॥ १६११ ॥

विजयोदया—दंसेहिं य दंशैर्मशकैश्च भक्ष्यमाण विद्युच्चरचोरस्ता वेदना अवगणय्य आराधना प्रपन्नः ॥

मूलारा—विज्जुचरो विद्युच्चरः ॥

अर्थ—दंश और मशकोंसे भक्षण किया गया विद्युच्चरनामक मुनि तीव्र वेदनाओंको सहकर रत्नत्रयाराधनाको प्राप्त हुआ

---

हत्थिणपुरगुरुदत्तो सम्मलिथाली व दोणिमंतम्मि ॥
डज्झंतो अधियासिय पडिवण्णो उत्तमं अट्ठं ॥ १५५२ ॥

वास्तव्यो हास्तिने धीरो द्रोणीमतिमहीधरे ॥
गुरुदत्तो यतिः स्वार्थं जग्राहानलवेष्टितः ॥ १६१२ ॥

विजयोदया—हत्थिणपुरगुरुदत्तो हास्तिनापुरवास्तव्यो गुरुदत्त । सबलिथालीव हरितसंकोश निरामाख [?] पूर्णभाजन अर्कपत्रपिहितमिद अधेमुख संस्थाप्य उपरिभाजनस्य अग्निप्रक्षेप सबलीत्युच्यते ॥ तद्वच्छिरसि निक्षिताग्नि. । दोणिमंतम्मि द्रोणीमत्पर्वते दह्यमान प्रपन्न उत्तमार्थ ॥

मूलारा—हत्थिणपुरगुरुदत्तो हास्तिनं पुरं यस्यासौ हास्तिनपुरो हास्तिनागपुरस्वामी स चासौ गुरुदत्तश्च स मुनि॰ सन् । संबलिथालीए वह्लशिखिपूरितमर्कपत्रप्रच्छादितमधोमुखभाजनं सर्वत्राग्निसंवेष्टितं सबलिस्थालीत्युच्यते ॥ दोणिमंतम्मि द्रोणिमति पर्वते । अधियासिय तद्दाहवेदना सहित्वा ॥

अर्थ—हस्तिना नगरके गुरुदत्त नामक मुनि द्रोणिमति पर्वतपर तप करते थे कोई दुष्टने संभली थाली के समान उनके मस्तकपर अग्नि रखकर जलाया था उसकी घोर वेदना सहकर वे रत्नत्रयको प्राप्त होगये मट्टीके भाजनमें वालकी फली भरकर चारों तरफ आकके पत्ते भरना चाहिये अनंतर उस भाजनका मुंह नीचे करके उसके चारो तरफ आग्नि लगा देना चाहिये इसको ही सभलीथाली कहते हैं.

---

गाढप्पहारविद्धो पूइगलियाहिं चालणीव कदो ॥
तध वि य चिलादपुत्तो पडिवण्णो उत्तमं अट्ठं ॥ १५५३ ॥

गाढप्रहारविद्धोऽपि कीटिकाभिरनाकुलः ॥
स्वार्थं चिलातपुत्रोऽगाच्चालनीकृतविग्रहः ॥ १६१३ ॥

विजयोदया—गाढप्पहारविद्धो नितरामायुधैर्विद्ध । पूइगलियाहिं कृष्णै॰ स्थूलोत्तमागेः पिपीलिकाभि । चालणीव कदो चालनीव कृतश्चिलातपुत्रस्तथाप्युत्तमार्थमुपगत. ॥

मूलारा—गाढप्पहारविद्धो नितरामायुधैर्विद्धः । पूइगिलियाइंहिं स्थूलमस्तककृष्णकीटिकाभि॰ । चिलादपुत्तो चिलातपुत्रो मुनि॰ ॥

अर्थ—तीव्र शस्त्रप्रहार होनेसे जो जखमी हुये थे और जिनका मस्तक बडा है ऐसीं काली काली चींटीओंने खाकर जिनका शरीर चालनीके समान छिद्रमय किया था ऐसे चिलातपुत्रनामक मुनि उत्तमार्थ को प्राप्त हो गये

---

दंडो जउणावंकेण तिक्खकंडेहिं पूरिदंगो वि ॥
तं वेयणमधियासिय पडिवण्णो उत्तमं अट्ठं ॥ १५५४ ॥

यमुनावक्रनिक्षिप्तः शरपूरितविग्रहः ॥
अध्यास्य वेदनां चडः स्वार्थं शिश्राय धीरधी॰ ॥ १६१४ ॥

विजयोदया—दंडो दंडनामको यति । जमुणावकेण यमुनावक्रसंज्ञितेन । तिक्खकंडेहिं तीक्ष्णै शरै॰ पूरितांगोऽपि रत्नत्रय समाराधयति स्म ॥

मूलारा—धण्णो धन्यो नाम मुनिः । दंडो इत्यन्ये । जमुणावकेण यमुनावक्रनाम्ना राज्ञा ॥

अर्थ—दंड नामक मुनिराजके ऊपर यमुनावक्र नामक दुष्टमनुष्यने बाणोंकी वृष्टि करके उनका सर्व शरीर व्रणयुक्त कर दिया तो भी उस मुनिराजने रत्नत्रयकी आराधना की ही.

---

अभिणंदणादिया पंचसया णयरम्मि कुंभकारकडे ॥
आराधण पवण्णा पीलिज्जंता वि यंतेण ॥ १५५५ ॥

यंत्रेण पीड्यमानांगाः प्राप्ताः पंचशतप्रमाः ॥
कुंभकारकटे स्वार्थमभिनंदनपूर्वगाः ॥ १६१५ ॥

विजयोदया—अभिणंदणादिगा अभिनंदनप्रभृतयः पंचशतसंख्या, कुंभकारकटे नगरे यंत्रेण पीड्यमाना अप्याराधनं प्राप्ता ॥



मूलारा—कुंभकारकडे कुंभकारकटसंज्ञे ॥

अनानृशस्याहिंसोपकरणादानतत्कथा· ॥
निसर्गाहिंस्रता चेति लिंगान्यस्य स्मृतानि वै ॥
मृपानंदो मृषावाक्यैरतिसधानाचिंतनम् ॥
वाक्पारुष्यादिलिंग तद्द्वितीयं रौद्रमिष्यते ॥
व
स्तेयानंद परद्रव्यहरणे स्मृतियोजनम् ॥
भवेत्संरक्षणानंद. स्मृतिरर्थार्जनादिपु ॥
प्रतीतलिंगमेवैतद्रौद्रध्यानद्वयं भुवि ॥
नारकं दु खमस्याहुःफल रौद्रस्य दुस्तरं ॥
वाह्यं तु लिंगमस्याहुरभंग मुखविक्रियाम् ॥
प्रस्वेदमंगकंप च नेत्रयोश्चेति ताम्रताम् ॥
प्रयत्नेन विनैवैतद्रौद्रध्यानद्वयं भवेत् ॥
अनादिवासनोद्भूतमतस्तद्विसृजेन्मुनिः ॥
अपि च—अतत्त्वमित्यतत्त्वाज्ञावैपरीत्येन भावयन्॥
प्रीत्यप्रीती समाधाय संक्लिष्ट ध्यानमृच्छति ॥
संकल्पो मानसी वृत्तिर्विपयेष्वनुतर्पिणी ॥
सैव दुष्प्रणिधानं स्यादपध्यानमतो विदुः ॥

स्वार्थघातकत्वाद्दुर्ध्यान त्यक्त्वा नित्यं सद्ध्यानैकतानो भवेत्युपदेशार्थमाह—

मूलारा— अवहट्ट अपहृत्य । महाभये दुर्गतिदुःखहेतुदुरितवंधनिदानत्वात् । सुगदीए सुदेवत्वसुमानुपपच-मागतिरूपायाः सुगतेः । पच्चूहे विघ्नभूते तत्कारणपुण्यवंधप्रक्षयप्रतिवंधित्वात् । समण्णागदमदीओ सम्यगनुगतबुद्धिः ।

अर्थ—अमनोज्ञसंप्रयोग-अनिष्टपदार्थोंका संयोग होनेपर उसका वियोग किस उपायसे होगा ऐसा वार २ विचार करना अमनोज्ञ संप्रयोग नामक आर्तध्यान है. इष्टवियोगज—स्त्रीपुत्रादिक पदार्थोंका वियोग होनेपर उनकी प्राप्ति की वार वार चिंता करना, परीषह प्राप्त होनेपर ये कैसे दूर होंगे ऐसा मनमें वार २ विचार करना.

आगेके भवमें मेरेको अच्छे २ पदार्थ प्राप्त होने चाहिये ऐसा विचार करना यह निदान नामक आर्तध्यान है

चोरी करनेका वार २ विचार करना, चारेस धन न लूटा जावे इस लिये उसका संरक्षण करनेके लिये शस्त्रादिक ग्रहणकर उनका रक्षण करनेके रुद्रपरिणाम वारंवार होना, छह प्रकारके आरंभ करना अर्थात् षट्कायजीवोंकी जिसमें हिंसा होती है ऐसा आरंभ करनेमें तल्लीन होना इसको रौद्रध्यान कहते हैं. हिंसा करनेवाले मनुष्यको रुद्र कहते हैं ऐसे मनुष्यमें उत्पन्न हुआ जो ध्यान उसको रौद्रध्यान कहते हैं ऐसा रौद्र ध्यानका लक्षण संक्षेपसे कहा है. ये आर्त और रौद्रध्यान दोनो भी त्यागने चाहिये क्योंकि ये महाभयके कारण हैं और सुगतिके प्रतिबंधक है अर्थात् दुर्गतिके कारण हैं ये धर्मध्यान और शुक्लध्यानके बाधक हैं ऐसा समझकर धर्म और शुक्ल ध्यानमें क्षपक सदा स्थिर रहता है

---

किमर्थमसौ ध्यानयो शुभयोर्वर्तेत इत्याशंकाया ध्यानप्रवृत्तौ कारणमाचष्टे—

**इंदियकसायजोगणिरोधं इच्छं च णिज्जरं विउलं ॥**
**चित्तस्स य वसियत्तं मग्गादु अविप्पणासं च ॥ १७०५ ॥**

**ध्याने प्रवर्तते कांक्षन्कषायाक्षनिरोधनम् ॥**
**वश्यत्वं मनसो मार्गादभ्रंशं निर्जरां पराम् ॥ १७७२ ॥**

विजयोदया—इंदियकसायजोगणिरोधं स्पर्शादिपूपजात उपयोग इंद्रियशब्देनोच्यते । कषाया क्रोधादयस्तै योंग संबंधस्तस्य निरोधं निवारणामिच्छन्निर्जरां च विपुलामिच्छन्, वस्तुयाथात्म्यसमाहितचित्तस्य नेंद्रियविपय जन्योपयोगसंभव , कपायाणा चोत्पत्ति , चित्तस्स य वसियत्त चित्तस्य स्ववशत्वं इच्छन् स्वेष्टविषये चित्तमसकृत्स्थापयतोऽनिष्टाच्च व्यावर्तयत स्ववशं भवति ॥ चित्तस्य मग्गादो अविप्पणासं च मार्गाद्रत्नत्रयादविप्रणाशं च वाछन् , अशुभध्यानप्रवृत्तौ रत्नत्रयात्प्रच्युतो भवामीति ध्याने प्रयतते ॥

धर्मध्यानस्य प्रयोजनमातर परिकरं च निर्देष्टुं गाथाचतुष्टयमाचष्टे—

मूलारा—जोग संबधः । इच्छं वाछन् । णिज्जरं शुभकर्मैकदेशसंक्षयं । विउलं वाह्याभ्यतरतपोविकल्पातरसाध्य निर्जरातोऽतिशायिनीं । वसियत्त स्ववश्यता । स्वेष्टेऽर्थे चित्तं स्थापयितु अनिष्टाच्च व्यावर्तयितुमित्यर्थः । मग्गादु अविप्पणास रत्नत्रयादप्रच्यवनम् ।

यह क्षपक शुभध्यानोंमे क्यों प्रवृत्त होता है इस शंकाके उत्तरमें कारणका निवेदन करते हैं—

अर्थ—स्पर्शादिक विषयोमें उत्पन्न हुआ जो उपयोग उसको यहां इंद्रिय कहते हैं इंद्रिय और कषायोंका संबंध नष्ट करनेकी यदि इच्छा हो, कर्मोंकी विपुल निर्जरा करनेकी यदि इच्छा हो, तो तू अपना चित्त स्वाधीन रखने का प्रयत्न कर. वस्तुके यथार्थ स्वरूप को जाननेमें अपने मनको एकाग्र कर. जब मन स्वाधीन होता है तब इंद्रियोंके विषयके प्रति उपयोग नहीं लगता है और कषायों की भी उत्पत्ति नहीं होती है. चित्तको अपने इष्ट विषयमें अर्थात् उत्तम क्षमादिक धर्मोंमें स्थिर करना चाहिये. और अनिष्टविषयोंसे परावृत्त करना चाहिये रत्नत्रयमार्गसे अपनी च्युति न हो ऐसी इच्छा करनेवाले क्षपक को अशुभ ध्यानका त्याग करना चाहिये. और शुभ ध्यानमें स्थिर रहना चाहिये

---

ध्यानपरिकरप्रतिपादनायोत्तरगाथा—

किंचिवि दिट्ठिमुपावत्तइत्तु झाणे णिरुद्धदिट्ठीओ ॥
अप्पाणंहि सदिं संधित्ता संसारमोक्खट्ठम् ॥ १७०६ ॥

एकाग्रमानसश्चक्षुर्व्यावर्त्य परवस्तुतः ॥
आत्मनि स्मृतिमाधाय ध्यानं श्रयति मुक्तये ॥ १७७२ ॥

विजयोदया—किंचिवि दिट्ठिमुपावत्तइत्तु वाह्यद्रव्यालोकात् किंचिच्चक्षुर्व्यावर्त्तयित्वा । झाणे णिरुद्धदिट्ठीओ एकविषये परोक्षज्ञाने निरुद्धचैतन्य.। दृष्टिनिमित्ते हि चैतन्ये दृष्टिशब्दोऽत्र युक्त । अप्पाणहि आत्मनि । सदिं स्मृतिं । संधित्ता संधाय । स्मृतिशब्देनात्र श्रुतज्ञानेनावगतस्यार्थस्य स्मरणमुच्यते, ससारमोक्खट्ठं ससारविमुक्तये ॥

प्रयोजनमुक्त्वा परिकर्माह—

मूलारा—किंचिवि किंचित्व । दिट्ठिं चक्षु.। उव्वेत्तयितु उपावर्त्य । वाह्यद्रव्यालोकनाद्व्यावर्त्य नासाग्रे दृष्टिं कृत्वेत्यर्थ॰ । णिरुद्धदिट्ठीओ एकविषये परोक्षज्ञाने निरुद्धचैतन्य॰ दृष्टिनिमित्ते हि चैतन्ये दृष्टिशब्दोत्र प्रयुक्तः । अप्पाणम्मि स्वसंवेदनसुव्यक्ते शुद्धचिद्रूपे स्वात्मनि । सदिं श्रुतज्ञानाधिगतार्थस्मरणं । उक्तं च—

पूर्वश्रुतेन संस्कारं स्वात्मन्यारोपयेत्ततः ।
तत्रैकाग्र्यं समासाद्य न किंचिदपि चिंतयेत् ॥

अपि च— गहिय तं सुयणाणा पच्छा सवेयणेण भावेज्ज ॥

जाणहु सुअमवलवदि मोमज्झदि अप्पसब्भावे ॥

ध्यानका परिकर कहनेके लिये गाथा—

अर्थ—नेत्रोंको बाह्य पदार्थोंके अवलोकनसे हटाना चाहिये अर्थात् नाकके अग्रभागपर नेत्रोंको निश्चल करना चाहिये तदनंतर एक विषयको धारण करनेवाले परोक्षज्ञानमें अपना ज्ञानोपयोग स्थिर करना चाहिये. स्वसंवेदनज्ञानसे जिसका अनुभव आता है ऐसे अपने शुद्ध चैतन्यरूप आत्मामें श्रुतज्ञानके साहाय्यसे आगमसे जाने हुए पदार्थोंका स्मरण करना चाहिये. यह ध्यान मुनिगण संसारसे मुक्त होनेके लिये करते हैं.

---

पच्चाहरित्तु विसयेहिं इंदियेहिं मणं च तेहिंतो ॥
अप्पाणम्मि मणं त जोगं पणिधाय धारेदि ॥ १७०७ ॥

**प्रत्याहृत्य मनोऽक्षाणि विषयेभ्यो महाबलः ॥**
**प्रणिधानं विधत्तेसावत्मनि ध्यानलालसः ॥ १७७४ ॥**

विजयोदया—पच्चाहरित्तु प्रत्याहृत्य । विसयेहिं विषयेभ्यः। इंदियाइं इंद्रियाणि मणं च मनश्च व्यावर्त्य । तेहिंत्तो विषयेभ्य. । मण त धारेदि तन्मनो धारयति । क अप्पाणहि आत्मनि । जोग योगं वीर्यांतरायक्षयोपशमजवीर्यपरिणामं । पणिधाय प्रणिधायास्थाप्य,एतदुक्तं भवति वीर्यपरिणामेन नोइंद्रियमतिं धारयतीति ॥

पुनरातरमेव परिकर्माह—

मूलारा—पच्चाहरित्तु व्यावर्त्य । इंदियाइ चक्षुराद्युपयोगान् । मण नो इंद्रियमतिं । तेहिंतो तेभ्यः । च विषयीकृत । जोगं पणिधाय वीर्यांतरायक्षयोपशमजं वीर्यपरीणाममवष्टभ्य वीर्यपरिणामविशेपेण शुद्धस्वात्मनि निर्विषया नोइंद्रियमतिं धारयतीत्यर्थः । स एपोऽन्त॰ परिकरः सूत्रकृतोक्तः । बाह्यस्त्वय—

पर्वतगुहायां, गिरिकंदरे, दर्यां, तरुकोटरे, नदीपुलिने, पितृवने, जीर्णोद्याने, शून्यागारे, वा व्यालमृगाणा पशूना पक्षिणा, मनुष्याणा वा ध्यानविघ्नकारिणा सान्निध्यशून्ये, तत्रस्थैरागतुभिश्च क्षुद्रजीवैर्वर्जिते उष्णशीतोने प्रवातादिविहिते निरस्तेन्द्रियमनोविक्षेपहेतौ, शुचावनुकूलस्पर्शभूभागे मंदमंदप्राणापानप्रचारो नाभेरूर्ध्वं, हृदि ललाटे वा यत्र वा मनोवृत्तिं यथापरिचयं प्रणिधाय ध्यायतीति तथैव चाज्ञाचक्षुस्तत्र भवतो भगवद्रामसेनपादाः—

यथोक्तलक्षणो ध्याता ध्यातुमुत्सहते यदा ॥
तदेदं परिकर्मादौ कृत्वा ध्यायतु धीरधीः ॥
शून्यागारे गुहायां च दिवा वा यदि वा निशि ॥
स्त्रीपशुक्लीवजीवाना क्षुद्राणामप्यगोचरे ॥
अन्यत्र वा क्वचिद्देशे प्रशस्ते प्रासुके समे ॥
चेतनाचेतनाशेषध्यानविघ्नविवर्जिते ॥
भूतले वा शिलापट्टे सुखासीनः स्थितोऽथवा ॥
सममृज्वायतं गात्रं निष्कंपावयवं दधत् ॥
नासाग्रन्यस्तनिःस्पंदलोचनो मंदमुच्छ्वसन् ॥
द्वात्रिंशद्दोषनिर्मुक्तकायोत्सर्गव्यवस्थित· ॥
प्रत्याहृत्याक्षलुंटाकास्तदर्थेभ्य· प्रयत्नत· ॥
चिंता चाकृष्य सर्वेभ्यो निरुध्य ध्येयवस्तुनि ॥
निरस्तनिद्रो निर्भितिर्निरालस्यो निरंतर ॥
स्वरूप पररूप वा ध्यायेदंतर्विशुद्धये ॥
किंच—देहावस्था पुनर्येव न स्याद्ध्यानोपरोधिनी ॥
तदवस्थो मुनिर्ध्यायेत्स्थित्वासित्वाधिशय्य वा ॥
देशादिनियमोऽप्येवं प्रायो वृत्तिव्युपाश्रय· ॥
कृतात्मना तु सर्वोपि देशादिर्ध्यानसिद्धये ॥

अर्थ—विषयोंसे इंद्रियां और मनको हटाना चाहिये अर्थात् इंद्रियोंका उपयोग और मनका उपयोग बाह्य पदार्थमें रागद्वेषमें प्रवृत्त होता है उनको रागद्वेषरहित होकर वहांसे हटाना चाहिये और वीर्यांतरायकर्मके क्षयोपशमसामर्थ्यसे मनोयोगको अपने आत्मामें स्थिर करना चाहिये.

कृतमनोनिरोध किं करोतीत्याशंक्याह—

एयग्गेण मणं रुंभिऊण धम्मं चउव्विहं झादि ॥
आणापायविवागं विचयं संठाणविचयं च ॥ १७०८ ॥

ध्यायत्येकाग्रचेतस्को धर्म्यध्यानं चतुर्विधम् ॥
आज्ञापायविपाकानां संस्थाया विचयं सुधीः ॥ १७७५ ॥

विजयोदया—एयग्गेण एकध्येयमुखतया । मण रुंभिदूण मनो निरुध्य । धम्मं धर्म्यवस्तुस्वभाव । चदुव्विहं चतुर्विकल्पं । झादि ध्यायति । अभ्यंतरपरिकरोयमुक्त सूत्रकारेण । बाह्य परिकर उच्यते । पर्वतगुहाया, गिरिकंदरे, दर्यो, तरुकोटरे, नदीपुलिने, पितृवने, जीर्णोद्याने, शून्यागारे वा व्यालमृगाणा पशूना, पक्षिणा, मनुष्याणा वा ध्यानविघ्नकारिणा सन्निधानशून्ये, तत्रस्थैरागतुभिश्च जीवैर्वर्जिते, उष्णशीतातपवातादिविरहिते, निरस्तेंद्रियमनोविक्षेपहेतौ, शुचावनुकूलस्पर्शे भूभागे मद मद प्राणापानविचार.नाभेरूर्द्ध्वं हृदि ललाटेन्यत्र वा मनोवृत्तिं यथापरिचयं प्रणिदधातीति बाह्यपरिकर । आणापायविपाकविचये आज्ञाविचयमपायविचयं, विपाकविचय, संठाणविचय च सस्थानविचयं च । तत्राज्ञाविचयो निरूप्यते— कर्माणि मूलोत्तरप्रकृतीनि तेषा चतुर्विधो बंधपर्याय उदयफलविकल्प जीवद्रव्यं मुक्त्यवस्थेत्येवमादीनामतींद्रियत्वात् श्रुतज्ञानावरणक्षयोपशमप्रकर्षाभावात् बुद्ध्यतिशये असति दुरवबोधं यदि नाम वस्तुतत्व तथापि सर्वज्ञज्ञानप्रामाण्यात् आगमविषयतत्वं तथैव नान्यथेति निश्चय सम्यग्दर्शनस्वभावत्वान्मोक्षहेतुरित्याज्ञाविचारनिश्चयज्ञानं आज्ञाविचयाख्यं धर्मध्यानं । अन्ये तु वदंति स्वयमधिगतपदार्थतत्वस्य परं प्रतिपादयितुं सिद्धातनिरूपितार्थप्रतिपत्तिहेतुभूतयुक्तिगवेषणावहितचित्ता सर्वज्ञज्ञानप्रकाशनपरा अनया युक्त्या इयं सर्वविदामाज्ञावबोधयितुं शक्येति प्रवर्तमानत्वादाज्ञाविचय इत्युच्यत इति ॥ अनादौ संसारे स्वैरं मनोवाक्कायवृत्तेर्मम अशुभमनोवाक्कायस्याऽपाय. कथ स्यादिति अपाये विचयो मीमासास्मिन्नस्तीत्यपायविचयं द्वितीयं धर्मध्यानं । जात्यधसंस्थानीया मिथ्यादृष्टय समीचीनमुक्तिमार्गापरिज्ञानात् दूरमेवापयति मार्गादिति सन्मार्गापाये प्राणिनां विचयो विचारो यस्मिंस्तदपायविचयं इत्युच्यत इति मिथ्यादर्शनज्ञानचारित्रेभ्य कथमिमे प्राणिनोऽपेयुरिति स्मृतिसमन्वाहारोऽपायविचय ॥ विपाकविचय उच्यते—समूलोत्तरप्रकृतीना कर्मणामष्टप्रकाराणा चतुर्विधबंधपर्यायाणां मधुरकटुकविपाकानां तीव्रमध्यमदंपरिणामप्रपचकृतानुभावविशेषाणा द्रव्यक्षेत्रकालभावापेक्षाणा एतासु गतिषु योनिषु वा इत्थंभूतं फलमिति विपाके कर्मफले विचयो विचारोऽस्मिन्निति विपाकविचय' ॥ वेत्रासनझल्लरीमृदंगसस्थानो लोक इति लोकत्रयसंस्थाने विचयोऽस्मिन्निति संस्थानविचयता ॥

एवं कृतपरिकर्मा मुमुक्षु' किं करोतीत्यात्राह—

मूलारा—एयग्गेण एकध्येयमुखतया । रुंभिऊण निरुध्य । आणेत्यादि आज्ञादिषु विचयः सम्यग्विचारणानिष्ट

ज्ञानं यस्मिन्नस्ति तदाज्ञाविचयमपायविचय, विपाकविचय, संस्थानविचयं चेति चतुर्विधं धर्मध्यान मुमुक्षुः प्रणिधत्ते। तद्यथा—

उपदेष्टुरभावान्मदबुद्धित्वात्कर्मोदयात्सूक्ष्मत्वाच्च पदार्थाना हेतुदृष्टातोपरमे सर्वज्ञप्रणीतमागम प्रमाणीकृत्य इत्थमेवेदं नान्यथा वादिनो जिना इति गहनपदार्थश्रद्धानादर्थावधारणमाज्ञाविचयः। अथवा स्वय विदितपदार्थतत्त्वस्य सत. पर प्रतिपिपादयिषोः स्वसिद्धाताविरोधेन तत्त्वसमर्थनस्तर्कनयप्रमाणयोजनपरः स्मृतिसमन्वाहारः सर्वज्ञाज्ञाप्रदर्शनार्थत्वादाज्ञाविचय इत्युच्यते॥ जात्यंधवन्मिथ्यादृष्टयः सर्वज्ञप्रणीतमार्गाद्विमुखा मोक्षार्थिनः सन्मार्गापरिज्ञानात्सुदूरमेवापयातीति सन्मार्गापायचिंतनमपायविचयः। अथवा मिथ्यादर्शनज्ञानचारित्रेभ्य· कथं नाम इमे प्राणिनोऽपेयुरिति स्मृतिसमन्वाहारोऽपायविचयः॥ कर्मणा ज्ञानावरणादीना द्रव्यक्षेत्रकालभवभावप्रत्ययं फलानुभव प्रति चिंताप्रबंधो विपाकविचयः॥ त्रिलोकसंस्थानस्वभावविचारणप्रणिधान संस्थानविचय·॥ स एव संक्षेपेण धर्मध्यानभेदनिर्णयो विस्तरतस्त्वार्पोक्तं धर्म्यं यथा—

तदाज्ञापायसंस्थानविपाकविचयात्मकं॥
चतुर्विकल्पमाम्नातं ध्यानमाम्नायवेदिभिः॥
तत्राज्ञेत्यागमः सूक्ष्मविषयः प्रणिगद्यते॥
दृश्यानुमेयवर्ज्ये हि श्रद्धेयांशे गति· श्रुतेः॥
जैनीं प्रमाणयन्नाज्ञा योगी योगविदांवर॥
ध्यायेद्धर्मास्तिकायादीन्भावान्सूक्ष्मान्यथागमम्॥
आज्ञाविचय एप स्यादपायविचय· पुनः॥
तापत्रयादिजन्माब्धिगतापायविचिंतनम्॥
तदपायप्रतीकारचित्रोपायानुचिंतनम्॥
अत्रैवान्तर्गतं ध्येयमनुप्रेक्षादिलक्षणम्॥
शुभाशुभविभक्ताना कर्मणा परिपाकतः
भवावर्तस्य वैचित्र्यमभिसंदधतो मुनेः।
विपाकविचयं धर्म्यमामनति कृतागमाः॥

विपाकश्च द्विधाम्नातः कर्मणामाप्तसूक्तिषु ॥
यथाकालमुपायाच्च फलपक्तिर्वनस्पतेः ॥
यथा तथैव कर्मापि फल दत्ते शुभाशुभं ॥
मूलोत्तरप्रकृत्यादिबंधसत्वाद्युपाश्रयः ॥
कर्मणामुदयश्चित्रः प्राप्य द्रव्यादिसन्निधिं ॥
यतश्च तद्विपाकज्ञस्तदपायाय चेष्टते ॥
ततो ध्येयमिद ध्यान मुक्त्युपायो मुमुक्षुभिः ॥
संस्थानविचय प्राहुर्लोकाकारानुचिंतनम् ॥
तदन्तर्भूतजीवादितत्वान्वीक्षणलक्षणम् ॥
द्वीपाब्धिवलयानद्रीन्सरितश्च सरांसि च ॥
विमानभवनव्यतरावासनरकक्षितीः ॥
त्रिजगत्सन्निवेशेन सममेतान्यथागमम् ॥
भावान्मुनिरनुध्यायेत्संस्थानविचयोपगः ॥
जीवभेदांश्च तत्रत्यान्ध्यायेन्मुक्तेतरात्मकान् ॥
ज्ञातृत्वकर्तृत्वभोक्तृत्वद्रष्टृत्वादींश्च तद्गुणान् ॥
तेषां स्वकृतकर्मानुभावोत्थमतिदुस्तरं ॥
भवाब्धिव्यसनावर्तं दोष्याद[illegible]कुलाकुलं ॥
महाज्ञाननावा सतार्यमतार्यं प्रविकात्मभिः ॥
अपारमतिगंभीरं ध्यायेदध्यात्मवित्पति ॥
किमत्र बहुनोक्तेन सर्वोऽप्यागमविस्तरः ॥
नयभंगशताकीर्णो ध्येयोऽध्यात्मविशुद्धये ॥
त्वप्रमत्तनाख्य स्थितिमान्तर्मुहूर्तिकीम् ॥

दधानमप्रमत्तेपु परां कोटिमधिष्ठितम ॥
सद्दृष्टिपु यथाम्नायं शेषेष्वपि कृतस्थितिः ॥
प्रकृष्टशुद्धिमल्लेश्यात्रयोपोद्बलबृंहितम् ॥
क्षायोपशमिकं भाव स्वमात्कृत्य विजृंभिन ॥
मोहोदर्कं महाप्राज्ञैर्महर्षिभिरुपासितं ॥
वस्तुधर्मानुयायित्वात्प्राप्तान्वर्थनिरुक्तिकम् ॥
धर्म्यं ध्यानमनुध्येय यथोक्तध्येयविस्तर ॥
प्रसिद्धचित्तता धर्मसंवेग· शुभयोगता ॥
सुश्रुतत्व ममाधानमाज्ञाधिगमजा रुचि· ॥
भवन्त्येतानि लिंगानि धर्म्यस्यातर्गतानि वै ॥
अनुप्रेक्षाश्च पूर्वोक्ता विवि धा शुभभावनाः ॥
बाह्य हि लिंगमगाना सन्निवेश· पुरोदित· ॥
प्रसन्नवक्त्रता सौम्या दृष्टिश्चेत्यादिलक्षणं ॥
फल ध्यानवरस्यास्य विपुला निर्जरैनमा ॥
शुभकर्मोदयोद्भूत सुख च विबुधेशिना ॥
स्वर्गापवर्गसंप्राप्ति फलमस्य प्रचक्षते ॥
साक्षात्स्वर्गपरिप्राप्ति पारंपर्यात्पर पदं ॥
ध्यानेऽप्युपरते धीमानभीक्ष्ण भावयेन्मुनिः ॥
सानुप्रेक्षाः शुभोदर्का भवाभावाय भावनाः ॥ इति ॥
व्याख्यातार्थसुखस्मृत्यर्थं चेय गीतिरंतश्चिन्त्या——
ध्यानस्य लक्ष्मभिर्निर्वचोधिपतिदेशकालफलभावाः ॥
स्थान प्रभेदनामार्थनिर्णयो गोचरो बलाधानम् ॥

मनका निरोध करनेके अनंतर ध्याताका कर्तव्य बताते हैं.

अर्थ—एक विषयके तरफ मनको निश्चल कर चार प्रकारके वस्तु स्वभावोंका क्षपक ध्यान करता है. यहांतक ध्यानका अभ्यंतर परिकर कहा है. अब बाह्य परिकरका वर्णन आचार्य करते हैं पर्वतकी गुहा, कंदरा, दरी, वृक्षका कोटर, नदीका रेतीला किनारा, श्मशान, जीर्ण बगीचा, शून्य मकान ऐसे स्थानोंमें तथा दुष्ट पशु गाय, बैल, हरिण वगैरे भद्र प्राणी, पक्षी और मनुष्य जिनसे ध्यानमें विघ्न आसकता है ऐसे प्राणिओंसे वर्जित स्थानमें ध्यान करना चाहिये जहां ध्यान करना हो वह स्थान आगंतुक कृमिकीटादिकोंसे रहित होना चाहिये, उष्ण, शीत, जोरदार वायु और धूप इत्यादि ध्यानमें विघ्न उत्पन्न करनेवाली अवस्थासे रहित ऐसे स्थानमें ध्यान करना चाहिये. जो स्थान इन्द्रिय और मनमें विकार उत्पन्न करेगा उसका त्याग करना चाहिये पवित्र, अनुकूल, स्पर्शयुक्त ऐसा भूप्रदेश ध्यानयोग्य है. ऐसे प्रदेशमें जाकर पद्मासनसे बैठकर श्वासोच्छ्वास धीरेधीरे करना चाहिये. नाभिके ऊपर, हृदयमें, ललाटपट्टमें अथवा अन्य स्थानमें अपनी मनोवृत्तीको यथास्थान एकाग्र करना चाहिये. यह सब ध्यानकी बाह्य सामग्री है

धर्मध्यानके आज्ञाविचय, अपायविचय, विपाक विचय और संस्थानविचय ऐसे चार भेद हैं. प्रथम आज्ञाविचयका वर्णन करते हैं–कर्मके मूल कर्म और उत्तर कर्म ऐसे बहुत भेद हैं इन कर्मोंके प्रकृतिबंध, स्थितिबंध, अनुभाग बंध और प्रदेशबंध ऐसे पर्याय हैं. इन कर्मोंका उदय होना, फल मिलना ऐसे अनेक प्रकार हैं जीवद्रव्यके मुक्त्यवस्था वगैरह पर्याय होते हैं ये सब अतीन्द्रिय हैं. ज्ञानावरणकर्मका विशिष्ट क्षयोपशम नहीं होनेसे मंद बुद्धिके द्वारा इन पदार्थोंका निश्चय नहीं होता है यद्यपि उपर्युक्त पदार्थोंका स्वरूप हमसे नहीं जाना जाता है सर्वज्ञका ज्ञान प्रमाण है और उपर्युक्त पदार्थ उसने कहे हुए आगमके विषय हैं, जैसा जिनेश्वरने इन वस्तुओंका स्वरूप कहा है वह सब सत्य ही है असत्य नहीं है ऐसा निश्चय करना यह निश्चय सम्यग्दर्शनका स्वभाव होनेसे मुक्तिका कारण है. इस प्रकार प्रभूके आज्ञाका विचार करना, निश्चय करना उसको आज्ञा विचय कहते हैं. यह आज्ञाविचय नामक धर्मध्यान है

अन्य आचार्य इसी आज्ञाविचय धर्मध्यानका स्वरूप इसप्रकार से भी कहते हैं—
स्वयं तो पदार्थोंका स्वरूप जानता है, सिद्धान्तमें कहे हुए जीवादि तत्वोंका ज्ञान करा देने वाली सत्ययुक्तीका

अन्वेषण करने वाली, सर्वज्ञकी आज्ञाको प्रगट करनेवाली ऐसी तर्कशक्तिके द्वारा मैं भव्यजीवोंको जिनप्रतिपादित तत्वोंका स्वरूप कह सकूंगा ऐसा तत्वस्वरूप जाननेवालेके मनमें जो बार बार विचार उत्पन्न होना यह भी आज्ञाविचय नामक धर्मध्यान है.

मैं अनादिकालसे इस घोर ससारमें भ्रमण कर रहा हू, मेरे मनवचन और कायकी प्रवृत्ति स्वछदसे होती है. इस अशुभ मन वचन काय योगसे मैं किस उपायसे अलग हो सकूंगा ऐसी अपायमें बार बार स्मृति होना यह अपायविचय नामक धर्मध्यान है

मिथ्यादृष्टि लोक जन्मांध मनुष्यके समान हैं. उनको सत्य मोक्षमार्गका ज्ञान नहीं है इसलिए सन्मार्गसे वे बहुत दूर जारहे हैं. ऐसा उनके विषयमें बार बार विचार उत्पन्न होना इसको भी अपायविचय कहते हैं ये मिथ्या दृष्टि लोक मिथ्यादर्शन, मिथ्याज्ञान और मिथ्याचारित्र से कैसे अलग होंगे ऐसा बार बार मनमें चिंता होना यह भी अपायविचय ध्यान है

कर्मके मूल भेद आठ हैं. उत्तरभेद एक सौ अठ्ठचालीस हैं इन कर्मोंके प्रकृति बंधादिक चार भेद होते हैं. इनका मधुर और कटुक ऐसा फल मिलता है. आत्मामें तीव्र, मद, मध्यम रूप अनुभवबंध उत्पन्न होता है द्रव्य, क्षेत्र, काल और भावकी अपेक्षासे इन कर्मोंमें विशेषता उत्पन्न होती है विशिष्ट गतिमें और विशिष्ट योनिओंमें विशिष्ट कर्मका फलानुभव जीवको प्राप्त होता है. इस प्रकार विपाकका अर्थात् कर्मफलका बार बार विचार जिसमे उत्पन्न होता है उस ध्यानको विपाकविचय ध्यान कहते हैं

वेतका आसन, झल्लरी और मृदगके समान तीन लोकका आकार है ऐसा विचार करना संस्थानविचय नामक धर्मध्यान है ।

---

धर्म्मध्यानस्य लक्षण निर्दिशति—

धम्मस्स लक्खण से अज्जवलहुगत्तमद्दवोवसमा ॥
उवदेसणा य सुत्ते णिसग्गजाओ रुचीओ दे ॥ १७०९ ॥

मार्दवार्जवनैःसंग्यहेयोपादेयपाटवं ॥
ज्ञेयं प्रवर्तमानस्य धर्म्यध्यानस्य लक्षणं ॥ १७७६ ॥

विजयोदया—धम्मस्स लक्खणं से,से तस्य। धम्मस्स धर्मस्य ध्यानस्य । लक्खणं लक्षणं। लक्ष्यते धर्म्यं ध्यानं येन तल्लक्षणं । अज्जवलहुगत्तमद्दवमुवदेसा आकृष्टातद्वयरज्जुवत्तनुवक्रकुटिलताविरह आर्जवं। लघुगत्त लघुता निस्संगता जात्याद्यष्टविधाभिमानाभावो मार्दव । उपेत्य जिनमत देशन कथनमुपदेश· हितोपदेश इति यावत् ॥ आर्जवादिभि· कार्यै-र्लक्ष्यते धर्म्यध्यानमिति आर्जवादिक लक्षण। न ह्यार्तरौद्रे आर्जवादिकं सपादयत· यदार्जवादिकं परिणाममात्मन करोति तद्धर्म्यध्यानमिति लक्षणभाव अथवा आर्जवादिपरिणामसद्भाव एव धर्म्यध्यानं प्रवर्तते नासत्यार्जवादौ । नहि मान-मायालोभकपायाविष्टो धर्मे प्रवर्तते, तेनार्जवादिकं कारण तेन लक्ष्यते धर्म्यमिति लक्षणतार्जवादीनाम् ॥

धर्मध्यानलिंगमवगमयति—

मूलारा—लक्खण लक्ष्यते धर्म्यध्यानं येन कार्यभूतेन कारणभूतेन वा आर्जवादिना तत्तस्य चिन्हं। दे ते। प्रसिद्धाः। लहुगत्त निःसंगत्वं। उवदेसणा य सुत्ते जिनमतोपदेशं। च निसग्गजा स्वभावोत्था। अन्ये तु उवदेसणो सुत्ते इति पठित्वा उपदेशे आज्ञायां तत्रैव रुचय इत्यर्थमाहु ॥

धर्मध्यानका लक्षण—

अर्थ—जिससे धर्मध्यानका परिज्ञान होता है वह धर्मध्यानका लक्षण समझना चाहिए आर्जव, लघुत्व, मार्दव, और उपदेश ये इसके लक्षण हैं. डोरीके दोनों छोर पकडकर खींचनेसे वह सीधी होती है, उसमें वक्रता नहीं रहती है वैसे कुटिलता अर्थात् कपटका अभाव होना यह आर्जव नामक स्वभाव है. निःसंगता अर्थात् निर्लोभी स्वभावको लघुत्व कहते हैं. जातिका गर्व, कुलगर्व इत्यादि आठ प्रकारके गर्वोंका अभाव होना इसको मार्दव कहते हैं. इन गुणोंसे युक्त होकर उपदेश करना यह उपदेश नामक गुण है इसको हितोपदेश भी कहते हैं आर्जवादिक कार्योंको देखकर धर्मध्यानको जान सकते हैं अत· आर्जवादिक धर्मध्यानका लक्षण माने गए हैं. आर्तध्यान ओर रौद्र ध्यानोंसे आर्जवादिक गुणोंकी प्राप्ति नहीं होती है. जो आर्जवादिकपरिणाम आत्मा में उत्पन्न करता है उसको धर्मध्यान कहते हैं. अथवा आर्जवादिक परिणाम होने परही धर्मध्यान उत्पन्न होता है उनके अभावमें नहीं उत्पन्न होता है. मान, माया, लोभा-दिकपायपरिणत मनुष्य धर्ममें प्रवृत्त नहीं होता है इसलिये आर्जवादिक धर्मध्यानके कारण हैं अत· धर्मध्यान और आर्जवादिक इनमें लक्ष्यलक्षणभाव सिद्ध होता है

---

आलंबणं च वायण पुच्छण परिवट्टणाणुपेहाओ ॥
धम्मस्स तेण अविसुद्धाओ सव्वाणुपेहाओ ॥ १७१० ॥

वाचनाप्रच्छनाम्नायानुप्रेक्षाधर्मदेशनाः ॥
भवत्यालंबनं साधोर्धर्म्यध्यानं चिकीर्षतः ॥ १७७७ ॥

विजयोदया—आलंबनप्रतिपादनायोत्तरगाथा । आलवणं च आश्रयश्च कस्स धम्मस्स धर्मध्यानस्य, वायण पुच्छण परिवट्टणाणुपेहाउ, वाचना प्रश्न परिवर्तनमनुप्रेक्षेति स्वाध्यायविकल्पा । वाचनादिस्वाध्यायाभावे वस्तुयाथात्म्यज्ञानमेव नास्तीति ध्यानाभाव । सति स्वाध्याये भवति ज्ञान विचल ध्यानसंज्ञितमित्यालवनता स्वाध्यायस्य । तेण तेन धर्मेण ध्यानेनाविरुद्धासव्वाणुपेहाउ, सर्वानुप्रेक्षा एकदैकत्राश्रये वृत्तेरविरोध । अनित्यतादिवस्तुस्वभावानुप्रेक्षण मनुप्रेक्षासावालवनं ध्यानमिति । एतेनानुप्रेक्षाया ध्यानेऽन्त पातित्वमाचक्षाणेनानुप्रेक्षोपन्यासे बीजाधान कृतम् ॥

धर्म्मस्याश्रयमाह —

मूलारा——आलंबण वाचनादिस्वाध्यायाभावे वस्तुयाथात्म्यज्ञानमेव नास्तीति ध्यानाभावः । सति स्वाध्याये भवति ज्ञानमविचलं ध्यानसंज्ञितमित्यालम्बनता वाचनादेर्धर्म्मं प्रति । परियट्टण पाठगुणनं । अणुपेहा अर्थचिंतन । तेण- धर्म्मेण । अविरुद्धाओ अनित्यत्वादिवस्तुस्वभावानुप्रेक्षणमाश्रित्य तत्प्रवृत्तेस्तदालंबनमनित्याद्यनुप्रेक्षाः संप्रेक्ष्याः ॥

धर्मध्यानके आधारभूत कारण—

अर्थ—वाचना, पृच्छना, अनुप्रेक्षा, आम्नाय और परिवर्तन ये स्वाध्यायके भेद हैं ये भेद धर्मध्यानके आधार भी हैं वाचनादिक स्वाध्यायके अभावमें वस्तुका यथार्थ ज्ञान ही नहीं होता है. ज्ञानके अभावमें धर्मध्यान नही होता है अतः स्वाध्याय धर्मका अवलवन हैं. स्वाध्यायसे जो निश्चलज्ञान प्राप्त होता है उसको ध्यान कहते हैं. इस धर्मध्यानके साथ अनुप्रेक्षाओंका अविरोध है. वस्तुके अनित्यादिधर्मोंका बार २ विचार करना यह अनुप्रेक्षाका लक्षण है ये अनुप्रेक्षाएं ध्यानके लिये आधार हैं इसलिये ध्यानमें इनका अन्तर्भाव होता है. इसीलिये ग्रंथकार आगे अनुप्रेक्षाओंका सविस्तर वर्णन करेंगे.

---

पूर्वोक्तान् धर्मस्य चतुरो भेदान् व्याचष्टे चतसृभिर्गाथाभि । तत्राज्ञाविचयं निरूपयति—

पंचेव अत्थिकाया छज्जीवणिकाए दव्वमण्णे य ॥
आणागज्झे भावे आणाविचएण विचिणादि ॥ १७११ ॥

पंचास्तिकायषट्कायकालद्रव्याणि यत्नतः ॥
आज्ञाग्राह्याणि दक्षेण विचार्याणि जिनाज्ञया ॥ १७७८ ॥

विजयोदया—पचेव अत्थिकाया पंचास्तिकाया जीवा पुद्गलधर्मास्तिकाया अधर्मास्तिकाया आकाशमिति तान् छज्जीवणिकायो षड्जीवनिकायान् कालदव्व कालाख्यं। अण्णे य अन्यांश्च कर्मबंधमोक्षादीन्। आणागेज्झे भावे सर्वज्ञाज्ञयागम्यान्भावान् । आणाविचयेण आज्ञाविचयाख्येन धर्मध्यानेन विचिणादि विचारयति। सर्वविद्भिरपास्तरागद्वेषैः परमकारुणिकै यथामीति निरूपितास्ते तथैवेति चिंताप्रबंध आज्ञाविचय यावत्। आणापायविवागविचये इत्यस्मिन्पाठे अपायविचयो नाम धर्मध्यानमिति गाथापूर्वार्धेन व्याचष्टे ।

आज्ञाविचयादीन्क्रमेण व्याचष्टे—

मूलारा—पंचत्थिकाय जीवपुद्गलधर्माधर्माकाशान् ॥ जीवणिकाये पृथिव्यप्तेजोवायुवनस्पतित्रसान् अण्णे बंध मोक्षादीन्। आणागव्भे सर्वज्ञाज्ञागम्यान् । विचिणादि विचारयति । सर्वविद्भिरपास्तरागद्वेषैः परमकारुणिकैर्यथामी निरूपितास्तथैवेति प्रवचेन चिंतयतीत्यर्थः ॥

आज्ञाविचय धर्मध्यानका वर्णन—

अर्थ—जीवद्रव्य, पुद्गलद्रव्य, धर्मद्रव्य, अधर्मद्रव्य और आकाशद्रव्य इनको पंचास्तिकाय कहते हैं. पृथिवी, जल, वायु, अग्नि और वनस्पति ये पांच स्थावर जीव हैं तथा द्वींद्रियसे लेकर पचेंद्रिय तक जीवोंको त्रस कहते हैं इनको आगममें षट्काय सज्ञा है कालद्रव्य, कर्मबंध, मोक्ष वगैरह अनेक पदार्थोंका स्वरूप सर्वज्ञ जिनेश्वर प्रणीत आगमसे जाना जाता है. इन तत्वोंका स्वरूप आज्ञाविचय नामक ध्यानसे ध्याता वार २ स्मृतिमें लाता है जिनके रागद्वेष नष्ट हुए हैं, ऐसे परमदयाळु श्री जिनश्वरनें जैस इन तत्वोंका स्वरूप कहा है वैसाही उनका स्वरूप है ऐसा वार २ स्मरण करना इसको आज्ञाविचयनामक धर्मध्यान कहते हैं

---

कल्लाणपावगाणउपाये विचिणादि जिणसदमुवेच्च ॥
विचिणादि वा अवाए जीवाण सुभे य असुभे य ॥ १७१२ ॥
कल्याणप्रापकोपायश्चिंतनीयो जिनागमे ॥
शुभाशुभविकल्पानामपायः कर्मणां परम् ॥ १७७९ ॥

विजयोदया—कल्लाणपावगाण उपाये तीर्थकरपददायकाना दर्शनविशुध्यादीनामुपायान् नि शकादीन् विचिनोति जिनमत जिनकथित उपदेश। विचिणादि वा अपाये जीवाण सुभे य असुभे य जीवाना शुभाशुभकर्मविपयानपायान् तान्विचारयति एतदुक्त भवति । शुभाशुभकर्मण कथमपायो भवति जीवस्य इति चिंताप्रवाहोऽपायविचयो नाम स्पष्टार्थोत्तरगाथा।

अपायविचयं तदन्तर्गतोपायविचयपुरःसरं व्याचष्टे—

मूलारा—कल्लाणपावगाणमुवाए कल्याणानामभ्युदयनिःश्रेयससुखाना प्रापकाणि संपादकानि सम्यग्दर्शनादीनि ते पामुपायान्साधनानि द्रव्यक्षेत्रादीनि । जिणमदमुवेच्च जिनमतमाश्रित्य । सुहे शुभकर्मविपयान ।शुभाशुभकर्मभ्य' कथमपायो जीवाना भवेदित्यपायविचयं ध्यायतीत्यर्थः । श्रीविजयाचार्योऽत्र आणापायविवागविचयो नाम धर्मध्यान आणापाय इत्यस्मिन्पाठे त्वपायविचयो नामेति व्याख्यत् ॥

अर्थ—अभ्युदय अर्थात् इहलोकके सुख निःश्रेयस-मोक्षसुखकी प्राप्ति करा देने वाले दर्शनविशुद्ध्यादिक सोलह कारण अर्थात् सोलह भावना तीर्थकर पदकी प्राप्ति कर देते हैं ऐसा जिनागमका उपदेश है इस उपदेशका वारंवार स्मरण करना इसको उपाय विचय धर्मध्यान कहते हैं द्रव्य, क्षेत्रादिकोंका आश्रय लेकर शुभ कर्म विषयक ओर अशुभकर्मविपयक अपायोंको जीव प्राप्त होता है ऐसा वारवार विचार करना इसको अपायविचय नामक धर्मध्यान भी कहते हैं

---

एयाणेयभवगदं जीवाणं पुण्णपावकम्मफलं ॥
उदओदीरणसंकमबंधे मोक्खं च विचिणादि ॥ १७१३ ॥
अहतिरियउड्ढलोए विचिणादि सपज्जए ससंठाणे ॥
एत्थे व अणुगदाओ अणुपेहाओ वि विचिणादि ॥ १७१४ ॥

एकानेकभवोपात्तपुण्यपापात्मकर्मणाम् ॥
उदयोदीरणादीनि चिंतनीयानि धीमताम् ॥ १७८० ॥
ऊर्ध्वाधः सत्रिलोकस्था द्रव्यपर्यायसंस्थितीः ॥
विचिंतयत्यनुप्रेक्षास्तत्रैवानुगतो यतिः ॥ १७८१ ॥

विजयोदया— अहतिरियउड्ढलोए ऊर्ध्वाधस्तिर्यग्लोकान्। विचिणादि विचारयति । कीदृग्भूतान् । सपज्जए सपर्ययान् संस्थानसहितान् सपर्यायं सत्रिभुवन सस्थानविचारविचयाख्यं धर्मध्यानं । एत्थेव अत्रैव । अणुगदाओ अनुगता.। अणुपेक्खाओ वि अनुप्रेक्षा अपि । विचिणादि विचारयति । अनित्यत्वादिस्वभावविचारं करोति धर्मध्याने इति कथित भवति ॥

विपाकविचयं व्याचष्टे—

मूलारा—उदयक्रमेण कर्मणोऽनुभवन । उदीरण अक्रमेण कर्मणा भुक्तिः । उक्त च—

कर्मणा फलदातृत्व द्रव्यक्षेत्राणि योगतः ॥
उदयं पाकजं ज्ञेयमुदीरणमपाकजम् ॥
समुदीर्यानुदीर्णाना स्वल्पीकृत्य स्थितिं वलात् ॥
कर्मणामुदयावल्यां प्रक्षेपणमुदीरण ॥
सक्रमः प्रकृते सजातीयप्रकृतिस्वरूपेण परिणमनम् ॥

संस्थानविचयं निर्दिशति –

मूलारा—सपज्जए सभेदान् । ससंठाण वेत्रासनझल्लरीमृदंगसमानाकारसहितान् । एत्थेव अत्रैव धर्म्यध्याने । अणुगदाओ तत्स।धकतममनोनिर्जयागत्वेन सवद्धाः । तदुक्तम्—

सचिंतयन्ननुप्रेक्षाः स्वाध्याये नित्यमुद्यतः ॥
जयत्येव मनःसाधुरिन्द्रियार्थपराङ्मुखः ॥

अर्थ—जीवोंको पुण्य और पाप कर्मका फलानुभवन संसारमें करना पडता है इन कर्मका उदय, उदीरणा संक्रम, बंध और मोक्षका वारवार विचार करना उसको विपाकविचय कहते हैं. द्रव्यक्षेत्रादिके आश्रयसे कर्मका योग्य कालमें आत्माको फल मिल जाना उदय कहा जाता है. और उदयमें आनेका जो निश्चित काल था उसके पूर्व ही कर्म अपना फल जीवको देता है उसको उदीरणा कहते हैं. एक कर्मप्रकृति सजातीय कर्म के स्वरूपसे परिणत होना सक्रमण कहते हैं. आत्माके प्रत्येक प्रदेश पर अनंतानंत कर्म आकर दूध और पानीके समान आत्म प्रदेशसे मिल जाना बंध है और संपूर्ण कर्म आत्मासे अलग होकर आत्मा पूर्ण शुद्ध स्वरूपधारक होता है वह मोक्ष है इस प्रकार वार २ विचार करना विपाकविचय है.

अर्थ—यह जगत् अधोलोक, मध्य लोक व ऊर्ध्वलोक ऐसा तीन प्रकारका है. वेत्रासन, झल्लरी और मृदंगके समान क्रमसे तीन लोकोंका आकार हैं इनका वार वार विचार करना संस्थानविचय नामक धर्मध्यान है इन ही धर्मध्यानोंमें अनुप्रेक्षाओंका भी अन्तर्भाव हैं.

---

कास्ता अनुप्रेक्षा इत्याशकायामध्रुवादीरनुप्रेक्षा निरूपयत्युत्तरप्रबंधेन—

अद्धुवमसरणमेगत्तमण्णसंसारलोयमसुइत्तं ॥
आसवसंवरणिज्जर धम्म बोधिं च चिंतिज्ज ॥ १७१५ ॥
लोगो विलीयदि इमो फेणोव्व सदेवमाणुसतिरिक्खो ॥
रिद्धीओ सव्वाओ सिविणयसदंसणसमाओ ॥ १७१६ ॥

अध्रुवाशरणैकान्यजन्मलोकविसूचिका· ॥
आस्रव· संवरश्चिन्त्यो निर्जराधर्मबोधयः ॥ १७८२ ॥
डिंडीरपिंडवल्लोक· सकलोऽपि विलीयते ॥
समस्ता संपदश्चात्र स्वप्नभूतिसमागमाः ॥ १७८३ ॥

विजयोदया—लोगो विलीयदि इमो लोको विलयमुपयाति। किमिव फेणोव्व फेनवत्। सदेव माणुसतिरिक्खो देवैर्मानुषैस्तिर्यग्भिश्च समन्वित इत्यनेन लोकत्रयस्यापि विनाशिताभिहिता। रिद्धीओ सव्वाओ ऋद्धय सर्वा। सुविणगदंसणसमाओ स्वप्नप्रज्ञानसमा। ननु लोगो विलीयदि इत्यनेन सर्वस्यानित्यता व्याख्याता, ऋद्ध्यादयोऽपि लोकान्तर्भूता इति किमर्थं भेदोपन्यास ?। अत्रोच्यते। समुदायस्यावयवात्मकस्यावयवानित्यतामन्तरेण तदनित्यता न सुखेनावगम्यत इति भिदोपन्यस्यते ॥

अनुप्रेक्षा अध्रुवादिविषयत्वेन द्वादश चिंतयेदित्याह—

मूलारा—अण्ण देहात्मनोर्भेद। असुइत्त अशुचित्व। एता विजयो नेच्छति। अधुनानुप्रेक्षा त्रयोदशगाथाभिरनुप्रेक्षते तत्र गाथार्द्धेन—

समुदायस्यानित्यता निरूप्योत्तरप्रबंधेन तदन्तर्गतावयवानित्यता भावयति—

मूलारा—सिविणयसदसणसमाओ स्वप्नज्ञानसमाना· ॥

अब अध्रुवादि अनुप्रेक्षाओंका सविस्तर वर्णन करते हैं—

अर्थ—अध्रुव, अशरण एकत्व, अन्यत्व, संसार, लोक, अशुचित्व, आस्रव, सवर, निर्जरा, धर्म और बोधि ऐसे बारा अनुप्रेक्षाओंका भी चिंतन करना चाहिए

अर्थ—देव, मनुष्य और तिर्यंच सहित यह जगत् फेनके समान नष्ट होता है सब ऋद्धिया भी स्वप्नमे देखे हुए पदार्थोंके समान नष्ट होती हैं शंका–सर्व लोकका नाश होता है इस कथनसे ही सर्व पदार्थोंकी अनित्यता सिद्ध हो गई अत· ऋद्धि भी लोकान्तर्भूतही हैं उनके नाशका वर्णन करनेकी क्या आवश्यकता थी? क्यों भेदरूपसे उनका वर्णन किया गया है? उत्तर—समुदाय जो कि अवयवी हैं उसकी अनित्यता अवयवकी अनित्यता दिखाये विना अवयवी भूत पदार्थोंकी अनित्यता सुखसे ध्यानमें नहीं आसकती हैं इस लिये भेदोपन्यास किया है

---

द्रव्यगतो लोभो महान् प्राणभृता तन्मूलत्वादिंद्रियसुखस्य।प्राणानप्यय त्यजति द्रव्यनिमित्तमतस्तदनित्यतामेव प्रागुपदर्शयति। निस्सगतामात्मन सपादयितु॥

विज्जूव चंचलाइं दिट्ठपणट्ठाइं सव्वसोक्खाइ ॥
जलबुब्बुदोव्व अधुवाणि हुंति सव्वाणि ठाणाणि ॥ १७१७ ॥

दृष्टनष्टानि सौख्यानि स्फुरितानीव विद्युताम् ॥
बुद्बुदा इव निःशेषा नश्वराः सन्ति गोचराः ॥ १७८४ ॥

विजयोदया—विज्जूव चंचलाइ विद्युदिव चचलानि, दिट्ठपणट्ठाइं दृष्टप्रणष्टानि, सव्वसोक्खाइ सर्वाणि सुखानि अभिमतरूपादिविषयपंचकस्य प्रपचस्य सन्निधानादुपजातानि यानि मन समुत्थानि सर्वेषा वा मानवाना तिरश्चा दिवि जाना वा सुखानि सुखलपटतया जन क्लेशाशनिशतनिपातमपि सहते, तानि च नीरभरविनतसभारगभीरधीराराव-नीलनीरदोदरपरिस्फुरत्तडिल्लतेव, एतेनानित्यतादोपोत्प्रकटनेन सासारिकसुखपराङ्मुखतोपायो निगदित । जलबुब्बुदोव्व जलबुद्बुदवत्। अध्रुवाणि अध्रुवाणि। होंति भवति। ठाणाणि सव्वाणि सर्वाणि स्थानानि। तिष्ठत्येतेपु जीवा इति स्थानानि। ग्रामनगरपत्तनादीनि॥ इद मदीय स्थान अत्राह वसामीति माकृथा सकल्पं। तानि अनित्यानि नित्यबुद्ध्या परिगृहीतानि विनाशे संक्लेशशतान्यानयतीति कथित॥ अथवा तिष्ठत्यास्मिन्स्वकृतविचित्रकर्मोदयात्प्राणिन इतींद्रत्व, चक्रलांछनत्व, गणाधिपतित्व वा एतानि स्थानान्यनित्यानि॥

मूलारा—सव्वसोक्खाइ मन षष्ठचक्षुरादिविषयानुभवप्रभवानि देवमानुषतिर्यक्संबंधीनि वा सुखानि। ठाणाणि इंद्रत्वादिपदानि ग्रामपुरपत्तनादीनि वा।

प्राणिओंको सबसे बडा द्रव्यहीका लोभ है द्रव्य लोभसे इंद्रिय सुख की प्राप्ति होती है द्रव्यके निमित्त प्राणोंको भी त्यागते हैं इस लिए द्रव्यकी अनित्यताका आचार्य प्रथमतः दिग्दर्शन करते हैं. इस दिग्दर्शनसे द्रव्यमें आत्मा निःसंग होता है–

अर्थ—सब प्रकारके सुख विजलीके समान दीखकर नष्ट हो जाते हैं इष्ट रूपादिक पांच प्रकारके विषयोंके सांनिध्यसे मनसे मनुष्य तिर्यंच और देवोंके सुखमें प्राणी सुखलंपट होकर लुब्ध होता है इस सुखके लिये हजारों क्लेश देनेवाली आपत्ति भी भोगनेके लिये जीव तयार होते हैं परंतु ये सुख जलसे नम्र और गंभीर गर्जना करनेवाले नील मेघोंमें चमकनेवाली विजलीके समान चञ्चल हैं. जहां जीव निवास करता है ऐसे ग्राम, नगर, पत्तन वगैरह स्थान अध्रुव अर्थात् नाशवंत हैं यह मेरा स्थान है, मैं यहां रहता हूं ऐसा मनमें तू संकल्प करना छोडदे क्यों कि ये स्थान अनित्य है परंतु इनमें नित्यपनाका सकल्प करके स्वीकार करनेपर उनका नाश होनेसे सैंकडो संक्लेश परिणाम उत्पन्न होते हैं अथवा इस जगतमें अपने किये हुए विचित्र कर्मके उदयसे जीवोंको इंद्रपना, चक्रवर्तिपना, गणधरत्व ऐसे स्थानोंकी प्राप्ति होती है परतु इन स्थानोंकी अनित्यता ही है.

---

णावागदाव बहुगइपधाविदा हुंति सव्वसंबंधी ॥
सव्वेसिमासया वि अणिच्चा जह अब्भसंघाया ॥ १७१८ ॥

नानादेशागताः पांथा नौगता इव बांधवाः ॥ १७८५ ॥
गत्वरा आश्रयाःसर्वे शारदा इव नीरदाः ॥

विजयोदया—णावागदाव जलयानपात्रारूढा इव बहुगदिपधाविदा हुति सव्वसंबंधी, विचित्रशुभाशुभपरिणामोपात्तगति कर्मवशात्तदुपनीयमानदेवमानवनारकतिर्यग्चाख्यगतिपर्यायग्रहणाय कृतप्रयाणबांधवाः सर्वेऽपि। पतनबंधुताया अनित्यतोक्ता। उपात्तगत्यपरित्यागे बंधुता स्थिरा भवति, उपात्ता चेत् त्यक्तान्या च गृहीता पितृपुत्रादीना गत्यंतरसुपगतानामपि बंधुत्वे स्वजनपरजनविवेक एव न स्यादिति मन्यते। सव्वेसिमासया वि सर्वेषामाश्रया अपि यानाश्रित्य प्राणिनो जीवितुमुत्सहते तेप्याश्रयाः स्वामी भृत्य पुत्रो भ्रातेत्येवमादयोऽनित्या यथा अब्भसंघादा अभ्रसघा इव॥

मूलारा—णावागदाव यानपात्रारूढा इव। बहुगदिपधाविदा विचित्रशुभाशुभपरिणामोपात्तगतिकर्मवशात्तदुपनी-

यमानदेवनारकमानवतिर्यक्त्वाख्यगतिपरिणामग्रहणाय प्रभूतमार्गगमनाय च कृतप्रयाणाः । बंधवो बांधवाः । आमया या- नाश्रित्य प्राणिनो जीवितुमुत्सहंते ते आश्रयाः स्वामी, भृत्य पुत्रो भ्रातेत्येवमादयः ।

अर्थ—नानाप्रकारके शुभाशुभपरिणामोंसे जिनको भिन्न २ गतिबंध हुआ है ऐसे अपने बंधुगण कर्मके वश होकर देवगति, मनुष्यगति, तिर्यंचगति और नरकगति एतत्स्वरूप पर्याय ग्रहण करने के लिये प्रयाण करते हैं इसलिये बंधुगण भी अनित्यही हैं. उनके ऊपर मोहयुक्त होना अयोग्य ही है. जिस गतिका बंध हुआ है उसको त्यागनेका सामर्थ्य इनमें यदि होता तो ये स्थिर माने जाते थे परंतु जो गति ग्रहण की थी उसको छोडकर जीव अन्य अन्य गति ग्रहण करते जाते हैं. पिता पुत्रादिक पूर्व पर्याय छोडकर अन्यगतिको प्राप्त करते हैं तो भी उनको बंधु ही माना जायगा तो ये मेरे स्वजन हैं ये परजन हैं इनका विवेक ही नहीं रहेगा

---

संवासो वि अणिच्चो पहियाणं पिण्डणं व छाहीए ॥
पीदी वि अच्छिरागोव्व अणिच्चा सव्वजीवाणं ॥ १७१९ ॥

छायानामिव पांथानां संवासो नश्वरोऽगिनाम् ॥
चक्षुषामिव रागोऽत्र न स्नेहो जायते स्थिर ॥ १७८६ ॥

विजयोदया—संवासो वि सहावस्थानमपि बंधुभिर्मित्रैः परिजनैर्वा, अणिच्चो अनित्यः । पहियाण पिण्डण इव- छाहीए नानादिग्देशागताना पथिकाना भिन्नस्थानयायिना मार्गोपकण्ठस्थितनिबिडतरगदिरपलाशालंकारविनतशा- खाकरशतनिवारितघर्मरश्मिप्रसरनकवरशीतलाविरलविपुलच्छायाया पांथाना समाज इव । पीदीवि प्रीतिरपि । अच्छि- रागोव्व प्रणयकलहपांसुपातदूषितप्रियतमालुठत्पाठीनोदरधवललोचनातराग इव अनित्या सर्वजीवाना । तथाह्यभि- याचरणचियकणिकाप्रणयलोचनप्रलय संविदधातीति प्राणभृतामनुभवसिद्धमेव ॥

मूलारा—संवासो बंधुमित्रपरिजनादिभिः सहावस्थानं । पथियाणं नानादिग्देशागताना भिन्नस्थानयायिना पाथाना । पिंडण मीलणं । छाहीए मार्गोपकण्ठस्थवृक्षवितानछायाया । अच्छिरागोव्व प्रणयकलहपांसुपातदूषितप्रियतमा- लुठत्पाठीनोदरधवललोचनगतो रागो लौहित्यं यथा ।

जिनके आश्रयसे प्राणी अपना जीवित धारण करनेमें समर्थ होते हैं वे मालिक, नोकर, पुत्र भाई वगैरह आश्रयस्थान भी बादलोंके समुदायके समान चचल है अतः सबसे मोह त्याग करके निःसंग होना चाहिये.

अर्थ—बंधु, मित्र और परिजनोंके साथ अपना रहना भी नित्य नहीं है जैसे रास्तेमें अनेक दिशा और देशसे आये हुए पथिक भिन्न भिन्न स्थानके प्रति जानेवाले होते हैं परतु मार्गके समीपके सघन जो पलाश, खदिर वृक्षोंकी सूर्यकिरणों को निवारण करनेवाली विस्तृत, शीतल, विपुल छायामें क्षणपर्यंत बैठकर विश्रांति लेते हैं अनंतर वे भिन्न भिन्न स्थानको प्रयाण करते हैं तद्वत मित्रादिक बंधुओंका सहवासभी अनित्य है. बाधवोंकी प्रीति भी अनित्य है. प्रणयकलहरूपी धूल पडनेसे कुपित प्राणप्रिय स्त्रीके कुदनेवाली मछलीके समान सफेत आखोंमें जैसा लालपना थोडी देरतक रहता है वैसा मित्रादिक बंधुओंका सहवास भी थोडी देरके लिये है. अप्रिय आचरण रूपी विपकणसे प्रेमरूपी नेत्रका नाश होता है यह सपूर्ण प्राणिओंके अनुभवमें आई हुई बात है.

---

रत्तिं एगम्मि दुमे सउणाणं पिण्डणं व संजोगो ।
परिवेसोव्व अणिच्चो इस्सरियाणाधणारोग्गं ॥ १७२० ॥

संयोगो देहिनां वृक्षे शर्वर्यामिव पक्षिणाम् ॥
आज्ञैश्वर्यादयो भावाः परिवेषा इव स्थिराः ॥ १७८७ ॥

विजयोदया—रत्तिं रात्रौ। एगम्मि दुमे एकस्मिन् द्रुमे। सगुणाण पक्षिणा। पिण्डण व पिण्डितमिव सजोगो स-योगो यस्यामस्तद्रुमामिमुख तत्र वयं प्राप्स्यामोन्योन्यमित्यकृतसकल्पाना यथाकथचिदन्योन्यप्राप्तिरल्पकाला तथा प्राणभृ-तामपि समानकालकालमारुतप्रेरितानामेकस्मिन कुलविटपिनि कतिपयदिनभावीसप्रयोग । परिवेसो व परिवेष इव । अणिच्च अनित्य । किं ? ईसरियाणाधणारोग । ऐश्वर्य प्रभुता आज्ञा धन आरोग्य च ॥

मूलारा—दुमे वृक्षे । संजोगो अकृतसंकल्पाना प्राणिना एकस्मिन्कुले अन्योन्यप्राप्तिः । परिवेसो सूर्यपरिधिः । इस्सरियाण प्रभुत्वमाज्ञा वा ॥

अर्थ—जैसे रातमें एक वृक्षपर पाक्षियोंका समुदाय आकर बैठता है हम सब मिलकर एक वृक्षपर निवास करेंगे ऐसा मनमें संकल्प कर वे वृक्षपर आकर नहीं बैठते हैं. रातमें निवासकर प्रातःकालमें वे वहांसे स्वेच्छासे गमन करते हैं वैसे प्राणीभी समान कालरूप वायुसे प्रेरित होकर एक कुलरूप वृक्षपर कुछहि कालपर्यंत आकर उत्पन्न होते हैं. जैसे सूर्यके चारो तरफ परिवेश उत्पन्न होता है परंतु वह थोडे कालतक ही टिकता है वैसे जीवोंमें आरोग्य सामर्थ्य, ऐश्वर्य थोडे दिनका है.

---

इंदियसामग्गी वि अणिच्चा संझाव होइ जीवाणं ॥
मज्झण्हं व णराणं जोव्वणमणवाट्ठिदं लोए ॥ १७२१ ॥
जीवानामक्षसामग्री शंपेवास्ति चला चलम् ॥
विनश्वरमशेषाणां मध्याह्न इव यौवनम् ॥ १७८८ ॥

विजयोदया-इंदियसामग्गीवि इंद्रियाणां सामग्र्यपि। अणिच्चा अनित्या। अधता बधिरता च दृश्यत एव। मज्झण्हं व मध्यान्हवत्, णराणं जोव्वणमणवट्ठिदं लोगे नराणां यौवनमनवस्थितं लोके यौवनोऽहमिति जनः श्लाघते, यौवनदर्पनिकारादेव बुध्यमानोपि धर्मे न प्रयतते तदानित्यं मध्यान्हवत् ॥ क्षिप्रतरं व्यतिवर्तिनि यौवने को यौवनकृतो जीर्णमदस्याच्च मनस्विनाम् ॥

मूलारा—अणवट्ठिदं क्षिप्रतरगत्वर ॥

अर्थ—इंद्रियोंकी सामग्री भी इस जीवको अपूर्ण रहती है. कोई जीव अंधा रहता है तो कोई जीव बहरा होता है अर्थात् संध्याकालके समान यह सामग्री अनित्य है मनुष्योंका तारुण्य अस्थिर है परंतु मनुष्य मैं तरुण हूं ऐसी स्वय प्रशंसा करता है तारुण्यके अभिमानमें आकर धर्ममें तत्पर नहीं होता है परंतु तारुण्य चिरकालतक नहीं रहता है वह भी मध्यान्ह कालके समान जल्दी नष्ट होता है ऐसे जल्दी नष्ट होनेवाले तारुण्यके विषयमे गर्व करना क्या बुद्धिमानोंको योग्य है? कभी भी नहीं

---

चंदो हीणो व पुणो विड्ढदि एदि य उदू अदीदो वि ॥
णदु जोव्वण णियत्तइ णदीजलमदच्छिदं चेव ॥ १७२२ ॥
चंद्रमा वर्द्धते क्षीण ऋतुरेति पुनर्गतः ॥
नदीजलमिवातीतं भूयो नायाति यौवनम् ॥ १७८९ ॥

विजयोदया—चंदो हीणोव पुणो वड्ढदि नित्यराहुमुखकुहरप्रवेशाद्धानिमुपगतोऽपि निशानाथ कृष्णपक्षे हीयते ॥ हीनो भवति। पुणो वड्ढदि पुन शुक्लपक्षे वर्द्धते ॥ प्रतिदिनोऽपचीयमानकाल । एदि य उदू अदीदोवि हिमशिशिरवसंतादयोऽतीता अपि ऋतव पुनरायान्ति न तु जोव्वण णियत्तेदि नेव यौवन निवर्ततेतिक्रान्तम्। तस्मिन्नेव भवे नदीजलमदच्छिदं चेव नदीजलमतिक्रान्तमिव न पुनरेति ॥ तद्वदिदं यौवनमित्यनेनानित्यततातिशयो यौवनस्य दर्शित ॥

मूलारा—हीणो नित्यराहुमुखकुहरप्रवेशाद्धानिं गतः । एदि य पुनरायाति च । उडु हेमतादि ऋतुर्नक्षत्र वा । णियट्टदि पुनरायाति । अदिच्छिदं अतिक्रातं । चेव यथा ।

अर्थ—हमेशा नित्य राहु के मुखमें प्रवेश करनेसे हानिको प्राप्त होता हुआ भी अर्थात् कृष्णपक्षमें प्रतिदिन कम कम होता हुआ भी चद्र शुक्ल पक्षमें वढने लगता है अर्थात् चंद्रकी एकात रूपसे हानि ही नहीं है. उसकी वृद्धि भी है हिम, शिशिर वसतादिक ऋतु व्यतीत होनेपर भी पुन: उनका आगम होता है परंतु तारुण्य वीतनेपर पुनः लौटता नहीं है उसभवमें तारुण्यकी पुनरावृत्ति होती नही है जैसे नदीका गया हुआ पानी फिर वही नहीं आता है वैसा यह तारुण्य पुन आता नहीं है इससे तारुण्यमें अनित्यताका अतिशय है यह सिद्ध होता हैं.

---

धावदि गिरिणदिसोदव आउगं सव्वजीवलोगम्मि ॥
सुकुमालदा वि हीयदि लोगे पुव्वण्हछाही व ॥ १७२३ ॥
धावते देहिनामायुरापगानामिवोदकम् ॥
क्षिप्रं पलायते रूपं जलरूपमिवांगिनाम् ॥ १७९० ॥

विजयोदया—धावदि गिरिणदिसोदव धावति गिरिनदीप्रवाह इव । किं ? आउग आयु । सव्वजीवलोगहि सर्वस्मिन् जीवलोके । सुकुमालदा वि हीयदि सुकुमारतापि हीयते । पुव्वण्ह छाही व पूर्वाह्नछाया इव । यथा यथोद्गच्छति तामरसबधुस्तथा तथोपसंहरति छाया शरीरादीना ॥

मूलारा—पुव्वण्णछाहीव पूर्वाह्नछाया यथा । सूर्यो हि यथा यथोदेति तथा तथोपसहरति शरीरादीना छाया ॥

अर्थ—पर्वतपरसे वडवेगसे वहने वाली नदीके प्रवाहके समान प्राणियोंका आयुष्यप्रवाह शीघ्र वहकर समाप्त होता है. जैसे जैसे कमलबंधु सूर्य ऊपर आता है वैसे २ शरीरादिकोंकी छाया कम होती हैं इस सर्व जीवोंके जगतमें प्राणिओंकी कोमलता भी पूर्वाह्नकी छायाके समान कम कम होती जाती है अर्थात् प्राणिओंका सौंदर्य वृद्धावस्था आनेपर नष्ट होता है.

---

अवरण्हरुक्खछाही व अट्ठिदं वड्ढदे जरा लोगे ॥
रूवं पि णासइ लहुं जलेव लिहिदेल्लयं रूवं ॥ १७२४ ॥
पौर्वाह्णिकी यथा छाया हीयते सुकुमारता ॥
पराह्णिकी यथा छाया सर्वदा वर्धते जरा ॥ १७२१ ॥

विजयोदया—अवरण्हरुक्खछाहीव अपराण्हवृक्षच्छायेव । अट्ठिदं वड्ढदे अस्तित्वं वर्द्धते ॥ क्रियाविशेषणत्वान्नपुंसकता । जरा लोगे लोके । सौरूप्यपल्लवदवानलशिखा, सौभाग्यप्रसूनकरकावृष्टि, युवतिहरिणालीव्याघ्री, ज्ञानलोचनपांशुवृष्टिस्तपस्तामरसवनस्य हिमानी, दीनताया जननी, परिभवस्य धात्री, मृतेर्दूती, भीते प्रियसखी या जरा सा वर्द्धते। रूवंपि णासदि लहुं रूपमपि विलासिनीकटाक्षेक्षणशरशततूणीरायमाणं, चेतोवलक्षसूक्ष्मवसनरंजने कौसुभरसायमानं, प्रीतिलतिकाया मूलं, सौभाग्यतरुफलं, कूलं पूज्यताया यद्रूपं तल्लघु विनश्यति ॥ किमिव जलेव लिहिदेल्लग रूवं जले लिखितरूपमिव ॥

मूलारा—अट्ठिद वड्ढदे अश्रात वर्धते । लिहिदेल्लयं लिखितं ॥

अर्थ—दिवसके उत्तरार्धमें वृक्षकी छाया जैसी वढने लगती है जरा वृद्धावस्था भी प्राप्त होनेपर प्रति दिन वढने लगती है यह वृद्धावस्था सौंदर्य रूप कोमल कोंपलपर अग्नीकी ज्वालाके समान आक्रमण कर उसको जलाती है. सौभाग्यरूपी पुष्पपर ओले की वृष्टिके समान है तारुण्यरूपी हरिणपर यह व्याघ्री के समान टूट पडती है ज्ञानरूपी नेत्रपर यह धूलीवृष्टिके समान है. तपरूपी कमलवनके लिये यह वृद्धावस्था वर्फके समान है, अर्थात् वृद्धपना तपको नष्ट करता है. यह वृद्धावस्था दीनताकी माता है. अपमानकी धाय है, मृत्युकी दूती है. भय की प्रिय सहेली है. इस वृद्धावस्थाकी प्राप्ति होनेपर रूपका नाश होता है यह रूप गुणसुंदर स्त्रियोंके कटाक्ष बाणोंका आश्रयस्थान है. मनरूपी स्वच्छ वस्त्र को रगानेके लिये कुसुंबी रगके समान है. प्रीतिलताका यह मूल है सौभाग्य वृक्षका यह फल है, पूज्यताका यह किनारा है. ऐसा भी उत्तम रूप पानीमे लिखे हुए चित्रके समान शीघ्र नष्ट होता है.

---

तेओ वि इंदधणुतेजसण्णिहो होइ सव्वजीवाणं ॥
दिट्ठपणट्ठा बुद्धी वि होइ मुक्काव जीवाणं ॥ १७२५ ॥

तेजो नश्यति जीवानां निर्लिपधनुपामिव ॥
उत्क्लेशनश्वरी बुद्धिर्दृष्टनष्टा प्रजायते ॥ १७९२ ॥

विजयोदया—तेजोवि इंदधणुतेजसण्णिहो शरीरस्य तेजोपि पौलोमीप्रियतमचापस्य तेज इव गर्जज्जन नयनचेतःप्रमोदादायि क्षणेन क्षयमुपव्रजति ॥ दिट्ठपणट्ठा दृष्टप्रणष्टा बुद्धि सकलवस्तुयाथात्म्यावकुंठशाज्ञानतम·पटल पाटनपटीयसी, विचित्रदु खग्राहकदंबकाकीर्णकुगतिविशालनिम्नगाप्रवेशनिवारणोद्यता, चारित्रनिधिप्रकटनक्षमा-दीपवर्ति', सकलसपदाकर्षणविद्या शिवगतिनायिकासफली एवभूता बुद्धिरप्युक्तवाशु नाशमुपयाति ॥

मूलारा—तेओ देहप्रभा । बुद्धि यथार्थप्रतिपत्तिः ।

अर्थ—मनुष्यके शरीकी कांति इद्रधनुष्यके समान क्षणपर्यंत नेत्रोंको लुभाती है परंतु क्षणके अनतर नष्ट होती है. सपूर्ण पदार्थ का यथार्थ स्वरूप दिखानेवाली, अज्ञानांधकारके समूहको नष्ट करनेवाली, अनेकदु खरूपी मगरोंसे भरी हुई कुगतिरूप विशाल नदीमें जीवके प्रवेशको रोकनेवाली, चारित्ररूपी निधिको प्रकट करने को दीप के समान सपूर्ण सपत्तिको उत्पन्न करनेवाली, मंत्रविद्याके समान, मुक्ति लक्ष्मी के दूतिके समान ऐसी बुद्धि भी व्यभिचारिणी स्त्रीके समान मनुष्यसे विदा लेती है

---

अदिवडइ बलं खिप्पं रूवं धूलीकदंबरं छाए ॥
वीचीव अध्दुवं वीरियंपि लोगम्मि जीवाणं ॥ १७२६ ॥

बलं पलायते रूपमिव रथ्यागतं रजः ॥
जलानामिव कल्लोलो वीर्यं नश्वरमंगिनाम् ॥ १७९३ ॥

विजयोदया—अतिवडइ बल खिप्प क्षिप्रमतिपतति बल, रूव धूलीकदंबर छाए रथ्याया पांशुरचितरूपमिव ॥ वीचीव चण्डप्रभजनाभिघातोत्थापिततरलतरगमालेव, अध्दुवं अध्रुवं । वीरिय वीर्यमपि । जीवानां शरीरस्य दृढता बलं· वीर्यमात्मपरिणाम ॥

मूलारा—अदिपडदि नश्यति । धूलीकदंब रथ्याया पासुरचित रूपमिव । वीची लहरी । अद्धुवं अध्रुवं । लोगम्मि लोके प्रसिद्ध ।

अर्थ—रास्तेमें वायुसे धूली ऊठकर उसकी वर्तुलाकृति उत्पन्न होती है. परंतु वह शीघ्र ही नष्ट होती है वैसे मनुष्यका बलभी जल्दी नष्ट होता है बडे मल्लभी क्षयरोगसे ग्रस्त होते हैं. मनुष्योंका पराक्रम भी प्रचंड हवाके

आघातोंसे उठी हुई लहरियोंकी पंक्तिके समान नष्ट हो जाता है. शरीरकी दृढता को वल कहते हैं, आत्माके अदम्य उत्साह को-धैर्य को वीर्य-पराक्रम कहते हैं

---

हिमणिचओ वि व गिहसयणासणभंडाणि होंति अधुवाणि ॥
जसकित्ती वि अणिच्चा लोए संज्झब्भरागोव्व ॥ १७२७ ॥

हिमपुजा इवानित्या भवन्ति स्वजनादय. ॥
जंतूनां गत्वरी कीर्तिः संध्याश्रीरिव सर्वथा ॥ १७९४ ॥

मूलारा—वेव इव । जसकित्ती यशःकीर्तिः । संज्झब्भ दिनातमेघः ।

अर्थ—वर्फ के समुदायके समान घर, शय्या, आसन, पात्र वगैरह पदार्थ नश्वर हैं और यशकी प्रसिद्धि भी सध्याकालीन मेघके समान नश्वर है.

---

स्पष्टोत्तरगाथा—

किह दा सत्ता कम्मवसत्ता सारदियमेहसरिसमिणं ॥
ण मुणंति जगमणिच्चं मरणभयसमुत्थिया संता ॥ १७२८ ॥

इदं जगच्छारदवारिदोपमं न जानते नश्वरमंगिनः कथम् ॥
यमेन हंतुं सकला' पुरस्कृता मृगाधिपेनेव मृगा वलीयसा ॥ १७९५ ॥
इति अध्रुवम् ॥

विजयोदया—किह कथं तावत् । अणिच्च जग ण मुणन्ति जगदनित्यं न जानाति । के सत्तादी सीदति स्वकृतपापवशात्तासु तासु योनिष्विति सत्वा. । सारदिगमेघसरिसमिणं शरदृतुसमुत्पन्न नैकवर्णविचित्रसंस्थानजीमूतमालासदृशं । मरणभयसमुच्छिदा संता मरणं विप वृपतमजीवितस्य सरीत्कृत प्रियवियोगादारकस्य, शोकाशनेर्जलदपटल, अयस्कातोपल तु खलोहाकर्पणे, वधुहृदयोपलाना द्रावकमौपधमायतापदामायतनं एवंभूतमरणभयसमुत्थिता सत ॥ एवमनित्यतामशेषवस्तुविपया ध्येयीकृत्य प्रवर्तते धर्म्यं ध्यान ॥ अध्रुव ॥

भोगार्थकर्मण्यग्राणा प्राणिना जगदनित्यत्वाज्ञान साश्चर्यमनुशोचति—

मूलारा—दा तावत् । वाक्यालंकारे । सत्ता प्राणिनः । कम्मपसत्ता कृष्यादिष्वासक्ता । सारद्ग शरत्प्रभवः । समीछिदा आच्छादिता अपि । उक्त च —

कर्मासक्ताः कथं सत्वाःशरन्मेघसमं जगत् ॥
सर्वमेतन्न जानंति मृत्युभीतियुता अपि ॥

अपिच— कथमिव दुरितज्वरणो भोगासक्ताः शरद्घनप्रतिम ॥
जानंति जगदनित्यं न जन्मिनो मरणभीतिभृत. ॥

अनित्यतानुप्रेक्षा ॥

अर्थ—ये सर्व प्राणी मृत्युभयसे युक्त होकर भी शरत्कालके मेघके समान इस विनश्वर जगत् कों क्यों नहीं जानते हैं यह बडा आश्चर्य है ये सर्व प्राणी अपने किये पापों के आधीन होकर अनेक योनियोंमें दुःख पाते रहते हैं इसलिये 'सीदंतीति सत्वाः' अर्थात् सत्व ऐसे अन्वर्थक नामको धारण करते हैं शरदृतुमें उत्पन्न हुए अनेक रंगोंको धारण करनेवाले, अनेक आकृति युक्त परतु नश्वर ऐसे मेघसमूहके समान यह जगत् नश्वर हैं. प्राणिओं को मरण विषके समान अप्रिय है शोकरूपी वज्रपातको उत्पन्न करनेवाला मानो मेघ पटल ही है, दुःखरूप लोहको खीचने के लिये मरण लोहचुंबकके समान है, बंधुओके हृदयरूपी पत्थरको द्रवयुक्त करनेमें औषधीके समान है. यह मरण दीर्घआपत्तिओं का घर है. इस प्रकार मरणभयसे युक्त सत्पुरुष संपूर्ण विषय अनित्य धर्मसे युक्त है ऐसा समझकर उन वस्तुओंको धर्मध्यानका विषय करते हैं.

---

अशरणताकथनायोत्तरप्रबंध । कर्माण्यात्मपरिणामोपनीतचिरकालस्थितीनि सन्निहितक्षेत्रकालभावाख्य सहकारिकारणानि यदा फलमशुभ प्रयच्छति तदा तानि न निवारयितु कश्चित्समर्थोऽस्ति तेनाशरणोऽस्म्यहमिति चिंता प्रबध कार्य इत्याचष्टे—

णासदि मदी उदिण्णे कम्मेण य तस्स दीसदि उवाओ ॥
अमदंपि विसं सच्छं तणं पि णीयं वि हुंति अरी ॥ १७२९ ॥

कर्मोदये मतिर्याति नोपायो विद्यतेऽङ्गिनाम् ॥
सुधा विषं तृणं शस्त्रं बंधुः शत्रुश्च जायते ॥ १७९६ ॥

विजयोदया—णासदि मदी नश्यति मति । उदिण्णे कम्मे उदीर्णे कर्मणि । बुद्धिर्द्विधा स्वाभाविकी आगमभवा च सा द्वयी यस्यासौ हितमवैति नेतर. ॥ उक्तं च-द्विधेह बुद्धिं प्रवदति संत स्वाभाविकीमागमसंभवा च । बुद्धिद्वयी यस्य शरीरिण स्यात् द्रष्टु हितं सोलमल न चान्य ॥१॥ स्वाभाविकी यस्य मतिर्विशुद्धा, तीर्थादवाप्तं न तु शास्त्रमस्ति द्रष्टुं हितं धर्ममसौ न शक्तो भाया विना रूपमिवाप्यनघ ॥२॥ तीर्थादवाप्तं श्रुतमस्ति यस्य स्वाभाविकी नास्ति मतिर्विशुद्धा, श्रुतस्य नाप्नोति फलं स तस्य दीपस्य हस्तेऽपि सतो यथाध ॥ ३ ॥ किं दर्पणेनावृतलोचनस्य विदानभोगस्य धनेन वा किं । शस्त्रेण किं वा युधि भीरुकस्य तथैव किं मंदमते श्रुतेन ॥ ४ ॥ ईदृशी बुद्धिर्नश्यति ज्ञानावरणाख्ये कर्मण्युदयमुपागते । तच्च ज्ञानावरणं वध्नाति जतुर्ज्ञानिना ज्ञानस्य ज्ञानोपकरणाना च क्षेपान्निन्हवादुपघातात् मात्सर्याद्विघ्नकरणादासादनाद्दूषणात् ज्ञानोर्दिनिग्रहकरणादकाले पठनात् परेंद्रियोपघातकरणादर्जित, अवग्रहेहावायधारणाविकल्प मतिज्ञानं श्रुतादिकं वा नाशयति ॥ उक्तं च ॥ अवग्रहीतुं च तयेहितुं च सोवेहितुं धारयितुं च सम्यग् । नाल भवत्यर्जितवानपुण्य कर्माधमं ज्ञानवृतेर्निमित्तं ॥ १ ॥ अंधश्च पश्यन् वधिरश्च श्रुण्वन् जिह्वा विना सौरसतास्तघासन् । त्वगीतये सत्यपि विष्वगेव न योविशेषान्विषयेषु वेत्ति ॥ २ ॥ एकेंद्रियद्वींद्रियता भवेषु स त्रींद्रियत्वं चतुरिंद्रियत्व । तेनावृत कर्ममहार्बुदेन प्राप्नोति जीवो विमनस्कता च ॥ ३ ॥ द्रष्टुं हितं श्रोतुमथेहितु च कर्तुं च दातु विधिना च भोक्तु ॥ स्वकर्मणा तेन नरो वृतस्सन् न बुध्यमान पशुनैति साम्यं । ४ ॥ स्वबुद्धिमात्रामपि शक्यमाप्तु श्रेय समीपस्थमिहाप्यविद्वान् । सुदूरसंस्थं च श्रुताभिगम्य स केन विद्यात्परलोकपथ्यं ॥५॥ महागुहाभीमतम प्रवेशात् सदाप्यगाधाभसि मज्जनाच्च । वनाच्चिर चारकरोधनाच्च स्यादेहिन कष्टतरोऽज्ञभाव ॥ ६ ॥ तम'प्रवेशोंभसि मज्जन च स्याद् खकृच्चारकरोधनं च ॥ जाताविहैकत्र भवास्त्वनतानज्ञानजं दु खमनुप्रयाति ॥ ७ ॥ नालं विशाल नयन तृतीयं श्रुत च मत्यारहितो ग्रहीतुम्॥ अंधोपि यस्मिन् सति याति मार्गे क्षेमे शिवे मोक्षमहापुरस्य ॥८॥ एवं भूतामक्षतामापादयति ज्ञानावरणं न किंचित्तन्निवारणक्षमं शरणमस्ति ॥ ण य तस्स दिस्सदि उवाउ, नैव तस्य कर्मणो निवारणे उपायो दृश्यते। असद्वेद्यस्य कर्मण उदयात् अमदंपि विस होदि अमृतमपि विष भवति । तणमपि सच्छ तृणमपि शस्त्र भवति । णीआ वि य होंति अरी बंधवोपि शत्रवो भवति ॥

एवमशेषवस्तुविषयामनित्यता ध्येयीकृत्य प्रवर्त्यमानं निर्वर्ण्य साप्रतमशरणता तद्धयेयामापाद्यमानामष्टादशगाथाभिर्भावयितुमुपदिशति । तत्र कषायावेशवशाज्जीवेन तद्घातिकर्माणि द्रव्यक्षेत्रादिसहकारिकारणसन्निधानादुद्भूयोद्भूय कटुतरमात्मफल प्रयच्छंति न कश्चिन्निवारयितुं शक्नोति इत्यहमस्मिन्नशरणोऽस्मीति चिंताप्रबंधो विधेय इति समुद्र· —

मूलारा—मदी अवग्रहादिमतिज्ञानमाप्तोपदेशप्रभवं श्रुतं च । तद्द्वययोगादेव हि हितमहित वा जानाति नान्यथा । उक्तं च—

द्विधेह बुद्धिं प्रवदन्ति संतःस्वाभाविकीमागमसंभवां च ॥
बुद्धिद्वयी यस्य शरीरिणःस्यात् द्रष्टुं हितं सालमल च नान्यः ॥

ईदृश्यपि द्वितयी बुद्धिर्ज्ञानावरणविशेषे कर्मण्युदिते सति नश्यति । तस्य तत्तादृग्बुद्धिविध्वंसनोद्यतस्य कर्मणो निवारणे । उवाओ प्रतीकारो । लोके च न दृश्यते इत्यशरणं बुद्धिविध्वंसि कर्मोस्त्वं भावयेत् । सर्वे पुरुषार्थसिद्धिनिबंधनत्वादबुद्धेः प्रधानतमत्वात्तद्विघातिकर्मानिवार्यताभावना प्रगुपदिष्टा । अमदपीत्यादि सद्वेद्याख्यकर्मण्युदीर्णे सति इति संबंधः ।

अशरणता भावनाका सविस्तर वर्णन आचार्य करते हैं ज्ञानावरणादिकर्म आत्मपरिणामोंसे उत्पन्न होते हैं कषायसें इन कर्मोंमें अधिक स्थिति पडती हैं. जब क्षेत्र, काल भाव वगैरह कारण आकर मिलते हैं तब अशुभ फल आत्माको इनसे मिलता है. तब इन कर्मोंका निवारण करनेमें कोई भी समर्थ नहीं होता है. इस वास्ते मैं अशरण हूं ऐसा बार बार विचार करना योग्य है ऐसा आचार्य कहते हैं —

अर्थ—कर्मका उदय आनेपर विचार युक्त बुद्धि नष्ट होती है. अवग्रह ईहा इत्यादिरूप मति ज्ञान और और आप्तके उपदेशमे उत्पन्न हुआ श्रुतज्ञान इन दोनों से मनुष्य प्राणी हित और अहितका स्वरूप जान लेता है अन्य उपायसे हिताहित नहीं जाना जाता है. शास्त्रों में इनका स्वरूप इस प्रकार कहा है—

१ सत्पुरुष स्वाभाविक बुद्धि और आगमजन्य बुद्धि ऐसे बुद्धिके दो भेद मानते हैं. जो मनुष्य इन दो बुद्धि ओंको धारण करता है वही अपना हित जाननेमें समर्थ होता है अन्य समर्थ नहीं होता है.

२ जिसकी स्वाभाविक बुद्धि तो निर्मल है परतु गुरुके मुखमे जिसने शास्त्राध्ययन नहीं किया है वह पुरुष जैसे नेत्रयुक्त मनुष्य रूपको देखकर भी भाषाके विना उसका वर्णन नहीं कर सकता है वैसे हितकर धर्मका स्वरूप जाननेमें असमर्थ होता है.

३ जिसको शास्त्रज्ञान तो है परतु स्वाभाविक निर्मल बुद्धि नहीं है वह श्रुतज्ञानका फल जो हित उसको नहीं प्राप्त कर सकता जैसे दीप हाथमें लेकर भी अंधा पुरुष अपनी इच्छित वस्तु नहीं प्राप्त कर सकता है.

४ जिसने अपना मुह वस्त्रसे ढक लिया है उसको दर्पणकी क्या जरूरत है. जो दान देता नहीं और भोगता भी नही उसको धनकी क्या अवश्यकता है! जो डरपोक है युद्धमें वह पुरुष शस्त्र लेकर करेगा ही क्या? वैसे जिसकी स्वाभाविक बुद्धि नहीं है वह शास्त्रसे अपना हित साध्य नहीं कर सकेगा

५ ज्ञानावरण कर्मका उदय आनेसे उपर्युक्त बुद्धि नष्ट हो जाती है ज्ञानी पुरुष, ज्ञान और उपकरण इनका द्वेष करना, इनको छिपाना इनका नाश करना. इनके साथ मत्सरभाव रखना, इनमें विघ्न उत्पन्न करना इनको अयोग्य बतलाना, इनमें दोष लगाना, इनको पीडा देना, अकालमें अध्ययन करना दूसरों की इंद्रिया बिघाडना इत्यादि कारणोंसे ज्ञानावरणीय कर्मका बंध होता है यह बंध अवग्रह ईहा, अवाय और धारणा रूप मतिज्ञान अथवा श्रुत ज्ञानादिकका नाश करता है.

१ ज्ञानको आच्छादन करनेवाला कर्म जब यह अपुण्यवान जीव बंध लेता है तब अवग्रह ईहा, अवाय और धारण ऐसे चारों ज्ञानोंसे भी पदार्थोंका सच्चा स्वरूप जानने में असमर्थ होता है

२ जो मनुष्य पदार्थोंके विशेषधर्मोंको नहीं जानता है वह नेत्रवान होकर भी अंधा है, सुनता हुआ भी बहिरा है, और जिव्हा युक्त होनेपर भी रसोंको नहीं जानता है ऐसा समझना चाहिये

३ कर्मसे ढका हुआ यह कभी एकेंद्रिय, कभी द्वीद्रिय, त्रींद्रिय, चतुरिंद्रिय और कभी असज्ञी पंचेंद्रिय बनता है

४ कर्माच्छादित यह जीव हितकर वस्तु को न देख सकता है न सुन सकता है और न उसका विचार करनेमें समर्थ होता है कर्मके वश होकर भी न दान देता है और न धनका स्वयं उपभोग ले सकता है इसलिये ऐसा कर्माच्छादित जीव पशुके बराबरीका समझना चाहिये

५ अल्प बुद्धि होनेसे मनुष्य अपने समीपका भी हितकर पदार्थका स्वरूप जाननेमें असमर्थ होता है. फिर जो श्रुतज्ञानसे ही जाना जाता है, जो परलोकमें हित करनेवाला है ऐसे पदार्थका स्वरूप वह अज्ञ कैसा जानेगा?

६ महाभयानक गुहाके सघन अंधकारमें प्रवेश करनेसे, आगाध पानीमें प्रवेश करनेसे, दृढ ऐसे कैदखानेमें डाला जानेसे प्राणीको कष्ट दायक अज्ञानका अनुभव आता है

७ अंधकारमें प्रवेश, पानीमें डूबना, कैदखानेमें डाला जाना इन बातोंसे प्राणिओंको एक जन्ममें-ही कष्ट होगा परंतु अज्ञानजन्य दुःख अनंत भवतक प्राणिओंका साथ नहीं छोडता है

८ जो पुरुष स्वाभाविक बुद्धिसे रहित है वह विशाल श्रुतज्ञान जो कि मनुष्यकी तीसरी आंख है धारण करनेमें असमर्थ होता है.

